**शक्तिमात्रशून्ययोरितरेतराश्रयणे इतरेतरप्रत्यासत्तेरेवायोगात् ॥ ॥ ॥**

**वेदेशतीर्थर टिप्पणेयु.**—अन्योन्यनियते भविष्यतइति ॥ तथाच परस्परनियततयासिद्धसाधनमिति भावः । प्रत्यासत्तेरेवेति ॥ तथाच प्रत्यासत्तिघटकत्वेनापीश्वरांगीकार्य इति भावः ॥

**राघवेंद्र तीर्थर टिप्पणेयु**—अंधपंगुन्यायेनेति ॥ अंधपंगू द्वावपि प्रत्येकमभिमतदेशं प्राप्तुमसमर्थावपि पंगुरंधस्कंधमारुह्य मार्गं प्रदर्शयतिचेत्तदांधः स्वयं पादचारेण गच्छति, तदोभावप्यभिमतदेशमन्योन्याधीनतया प्राप्नुतः । तथा चिच्चेत्येअपि अन्योन्याधीनतया स्वस्वव्यापारं कुरुतां, तथाचाप्रयोजका हेतवइति शंकार्थः । अंधपंग्वोरन्योन्यमेलने ह्येवं भवति । अंधोहि पंगुपार्श्वं गंतुं मार्गदर्शनार्थं पंगुमपेक्षते । पंगुरप्यंधसमीपमाप्तुं तदीय पादचारमपेक्षते । अतस्तयोर्मेलकस्य पटुकरणस्यान्यस्याभावे मेलनविषयेऽन्योन्याश्रयेण मेलनायोगइव चिच्चेत्ययोः प्रत्यासत्तेरेवायोगः । दूरे तदधीनाभिमतसिद्धिरित्येवकारार्थः ॥

श्रीराघवेंद्रतीर्थर टिप्पणेय अर्थ—अंधपंगु-कुरुडनू कुंटनू एंब ई इब्बरू प्रत्प्रत्येकवागि इष्ट देशक्के होगलसमर्थरिद्दरू कुंटनु कुरुडन हेगललि कुळितु मार्ग तोरिसलु कुरुडनु स्वतः पाददिंद नडेयुत्ताने, आग्गे इब्बरू अभिमतदेशक्के बरुत्तारे. इदरंते चिच्चेत्यगळादरू परस्परापेक्षेयिंद स्वस्वव्यापारगळनु माडलि; निम्म पूर्वोक्त अपर्याप्तशक्त्यादिमत्वरूपहेतुगळु अप्रयोजक ( हेतु इरलि, साध्य बेड एंबदागि ) आदवु एंब तात्पर्य.

ई पूर्वोक्त सम्मेलनवु अंधपंगुगळ परस्पर सम्मेलनवादरे कूडीतु; अंधनु पंगुविन समीप बरुवदक्के तनगे दारि तोरिसुवदक्कागि पंगुविनंनु अपेक्षिसुत्ताने, पंगुवादरु अंधन समीप बरुवदक्के अंधनंनु अपेक्षिसुत्ताने, ई इब्बर संघटनक्के मरनेयवनिल्लदिरे इवरिब्बरलि परस्पर मेलनवु ( अन्यो-

न्याश्रय दोष बरुवदरिंद ) हेगे आगुवदिल्लवो अदरंते चिच्चेत्यगळिगादरू प्रत्यासत्ति ( संबंध, परस्पर सम्मेलन ) कूडुवदिल्ल. संबंधविल्लद्दरिंद संबंधाधीन अभिमतसिद्धियु दूरदल्लिये उळियितेंदु ‘ प्रत्यासत्तिरेव ’ एंब शब्ददल्लिद्द ‘ एव ’ कारार्थवु.

टीकेय अर्थ—चिच्चेत्यगळे अंधपंगुन्यायदिंद अन्योन्य नियमन माडलि- ईश्वरनिंदेनु प्रयोजनवेंदु पूर्वपक्ष बरलु सिद्धांतकाररु उत्तर हेळुत्तारे— स्वतः शक्तिमात्रशून्यगळादंथ एरडु पदार्थगळिगे ( चिच्चेत्यगळिगे ) अन्योन्यसापेक्षता हेळलु अन्योन्याश्रयदोष बरुत्तदे, कारण परस्पर संबंधवे कूडुवदिल्ल.

संबंध माडुववनोब्बनु बेरे पुरुषनु बेकेंदु सिद्धवाद्दरिंद अंथ पुरुषने ईश्वरनेंदु तिळियतक्कद्दु एंब अभिप्राय.

टीका—प्रयोजनमननुसंदधदयं नानियच्छेत्। तद- नुसंधानेचापूर्णः स्यादिति तर्कपराहतिपरिहाराय नियमनशीलत्वात्प्रयोजनानुसंधानाभावेपि तदु- पपन्नमिति ज्ञापयितुं यंतेति ताच्छीलक तृन्नंत- प्रयोगः । तथाच श्रुतिः—“ देवस्यैष स्वभावो- यम् ” इति ॥ ॥ ॥ ॥

वेदेशतीर्थर टिप्पणियु-अपूर्ण इति ॥ यत्प्रयोजनार्थं नियमनं तदूनत्वादिति भावः ॥

राघवेंद्रतीर्थर टिप्पणियु-चिच्चेत्ये केनचिन्नियते इति प्रागुक्तानुमानस्य नियमनायोगरूप तर्कपराहतिमाशंक्य निराह । प्रयोजनमिति ॥ अयं नियंतृत्वेनाभिमतो नानियच्छेत्-व्यापारेषु प्रेरणां न कुर्यात् । अपूर्णः स्यादिति ॥ तथाच चैत्रादेरिव नियं- तृत्वायोगइति भावः । एषइति ॥ “ इषु गतौ भावे घञंतं ”

एषः नियमनादिरूपोयं व्यापारः देवस्य स्वभावः । जीवानां निमेषादिरिवेत्यर्थः ॥

टीकेयल्लि 'एषः' एंत बंददे, आवग्गे इद्द श्रीराघवेंद्रतीर्थर टिप्पणेय अर्थ.

'एषः' एंब पदक्के 'नियमनादिरूपोयं व्यापारः' एंब अर्थवु हेगेंदु आक्षेपिसलु श्रीराघवेंद्रतीर्थरु हेळुत्तारे.–'इषु-गतौ भावे घञंतं' एषः नियम० स्य स्वभावः ॥ अर्थ.–'इषु-गतौ' हीगे दिवादिगणदल्लि पठितवाद 'इष्' धातुविन देसेयिंद 'हळश्च' ई सूत्रदिंद 'भावे घञ्' माडलागि 'एषः' एंब रूपवु सिद्धवागुत्तदे. अदक्के नियमनादिरूप व्यापारवे अर्थ. ई व्यापारवु देवस्य परमात्मन स्वभाववेंदु तिळियबेकु. सिद्धांत कौमुदियल्लि 'प्रादूहोढोढ्येषैष्येषु' ई सूत्रद उदाहरण कथनकालदल्लि 'इष्' धातुविन देसेयिंद 'घञ्' प्रत्यय माडलागि 'एषः' एंब रूपवागुत्तदेंदु हेळिरुत्तदे. एवंच 'एषः' एंब स्थळदल्लिद्द रूप पुल्लिंगी 'एतत्' शब्दद प्रथमैकवचनांतद रूपवल्लेंदु तिळियबेकु.

टिकेय अर्थ.–'चिच्चेत्ये केनचिन्नियते' एंब प्रागुक्त अनुमानक्के नियमन अयोगरूप तर्क पराहति बरुत्तदेंदु शंकिसि निराकरण माडुत्तारे 'प्रयोजन' एंब वाक्यदिंद–'प्रयोजनमनुद्दिश्य नमंदोपि प्रवर्तते' एंब न्यायानुसार ईश्वरनु प्रयोजनवन्ननुसंधान माडदे (फलापेक्षा इल्लदे) चिच्चेत्यगळन्नु नियमन माडलारनु; अनुसंधान मादिद पक्षदल्लि (फलापेक्षा माडिद पक्षदल्लि) अपूर्णनादनु. हीगे तर्कपराहति परिहरिसुवदक्कागि चिच्चेत्यगळन्नु नियमन माडुवदु इदोंदु परमात्मन स्वभावविरुवदरिंद. प्रयोजनद अनुसंधानविरदे इद्दरू नियमन माडुवदु आतनिगे कूडुत्तदेंब मातु तिळिसुवदक्कागि 'यंता' यंब ताच्छीलक तृन्नंत प्रयोग श्रीमदानंदतीर्थरु माडिरुत्तारे. मत्तु श्रुतियादरु 'देवस्यैषस्वभावोयं' हीगे इरुत्तदे. इदर अर्थ.—नियमन माडुवदु परमात्मन स्वभावविरुत्तदे. हेगेंदरे दृष्टांत–कण्णुयवे बडेयुवदु हेगे जीवन स्वभाववो अदरंते.

मेले 'ताच्छीलक' एंब शब्दवु बंदिरुत्तदे. अदर अर्थ.—तत एंदरे नियनवु; शीलं एंदरे स्वभाववु; यस्य एंदरे याव पुरुषनद्दु.

**टीका.—नच रुद्रादीनामिव रमापतेरपि कथं चिच्चेत्ययंतृतोपपत्तिरिति वाच्यं। यतोसावपर्याप्तशक्तिमत्वादीनां हेतूनां पक्षधर्मताबलेन सिध्यन् पूर्णशक्त्यादिरूपेणैव सिद्ध इत्याशयवानाह—सर्वत्राखिलसच्छक्तिः स्वतंत्रोऽशेषदर्शन इति ॥ सर्वत्र-सकलचिच्चेत्यनियमनविषये: अखिला-पर्याप्तासती, प्रतिबंधदोषराहिता शक्तिर्यस्यासौ तथोक्तः। स्वतंत्रः-स्वेच्छाधीनप्रवृत्तिः। अशेषविषयत्वादशेषं दर्शनं यस्यासावशेषदर्शन इति ॥**

वेदेशतीर्थर टिप्पणे.—तथाच रमापतिः नचिच्चेत्ययंता चेतनत्वात् रुद्रादिवत्, इति सत्प्रतिपक्ष इति भावः। नच भिन्नपक्षत्वात्कथं सत्प्रतिपक्षइति वाच्यं । विरोधिविषयकत्वमात्रस्यैव प्रयोजकत्वेन पक्षाभेदस्याप्रयोजकत्वादिति भावः । पक्षधर्मताबलेनेति ॥ अपर्याप्तशक्तिमत्वादीनां हेतूनां पक्षधर्मत्वेऽपर्याप्तशक्तिमच्चिच्चेत्यनियामकोहि नापर्याप्तशक्त्यादिमान् सिध्यति । तथात्वे तस्यापि केनचिन्नियतत्वप्रसंगात्। अन्यथा तत्रैव व्यभिचारात्। किंतु पर्याप्तशक्त्यादिमानेवेति भावः । पूर्णशक्त्यादि-

रूपेणैवेति ॥ तथाच प्रतिपक्षानुमानेऽपूर्णशक्त्यादिमत्त्वमुपाधिरिति भावः। यदि स्वतंत्रत्वं स्वसत्तादौ परानपेक्षत्वं, तर्हि परमापेक्षत्वं केनचिन्नियतत्वे हेतुः कर्तव्यं । तथाच साध्याविशिष्टो हेतुरित्यत आह । स्वतंत्रः-स्वेच्छाधीनप्रवृत्तिरिति ॥ स्वेच्छामात्राधीनप्रवृत्तिरित्यर्थः। नित्याया अपि भगवत्प्रवृत्तेरिच्छाधीनत्वं न्यायमते द्रव्यत्वादिजातेर्गुणवत्वाद्यधीनत्ववन्मायिमतेऽनादिजीव ब्रह्मविभागस्याविद्याधीनत्ववच्चोपपन्नं । नन्विदं स्वातंत्र्यमसांप्रदायिकमिति चेन्न । 'स्वेच्छानुसारितामेव स्वातंत्र्यं हि विदो विदुः' इत्यनुव्याख्यानेऽभिधानादिति भावः ॥

अर्थ-( वं. टी. ) चिच्चेत्ये केनचिन्नियते अपर्याप्तशक्त्यादिमत्वात् एम्ब सिद्धान्तिगळ पूर्वानुमानद विरुद्ध रमापतिः नचिचेत्ययंता चेतनत्वात् रुद्रादिवत् हीगे सत्प्रतिपक्षानुमान हुट्टुत्तदेन्दु पूर्वपक्षकारनु अन्नुत्ताने. सत्प्रतिपक्षानुमानद अर्थवेनेंदरे-' साध्याभावसाधकं हेत्वन्तरं यस्य विद्यते स सत्प्रतिपक्षः ' सत्प्रतिपक्षदल्लि हेतु एरडनेदु इरबेकु, पक्षवु मात्र ओंदे इरबेकेंदु हीगे नियमविरुत्तदे. हीगिरलु नीनु हेळिरुव सत्प्रतिपक्षानुमानदल्लि पक्षभेदं[1] उंटु, कारण नीनु हेळिद दोष कूडुवदिल्लेंदु सिद्धांतिगळु हेळलु पूर्वपक्षकारनु साधन माडुवदेनेंदरे.-सत्प्रतिपक्षदल्लि विरोधिविषयतामात्र इद्दरे साकु, पक्षाभेदवु अप्रयोजकविरुत्तदे. ( इल्लि केनचिन्नियतत्वरूप साध्यद विरोधियाद ) चिच्चेत्यानियंतृत्वाभावरूप विरोधिविषयता इरुत्तदे; सत्प्रतिपक्षवु प्राप्तवे आयितु एन्तेन्दरे, विरोधिविषयता कूडवदे इल्लवेंदु सिद्धान्तकाररु हेळुत्तारे. ह्यागेन्दरे-चिच्चेत्यदल्लि अपर्याप्तशक्त्यादिमत्वरूप हेतु सिद्धवागुवदरिंद अपर्याप्तशक्त्यादियुळ्ळ चिच्चेत्यनियामकनु पूर्णशक्तियुळ्ळवनेंदु सिद्धवागलिक्के बेकु. अवनु पूर्णशक्तियुळ्ळवनल्लवेंदरे आतनि-

१ पुर्वानुमानदल्लि ' चिच्चेत्ये ' एंबदु पक्षवु, इल्लि ' रमापतिः ' एंबदु पक्षवु; हीगे पक्षभेदवेंतर्थ.

गादरू यावनो ओब्बनु नियामकनिरुत्तानेंदु कल्पिसबेकायितु. हीगे कल्पिसलु अपर्याप्तशक्त्यादिमत्वरूप हेतु ईश्वरनल्लि बंदितु. अल्लि केनचिन्नियतत्वरूप साध्य बरलिल्ल, व्यभिचार बंदितु. आ कारण ईश्वरनु पूर्णशक्त्यादियुळ्ळवनेंदु सिद्धवागुत्तदे. हीगे सिद्धवागलु प्रतिपक्षानुमानदल्लि अपूर्णशक्त्यादिमत्वरूप उपाधि बरुत्तदे. हेगंदरे.–" साध्यव्यापकत्वे-सति साधनाव्यापकत्वमुपाधिः " । दृष्टांतभूत रुद्रादिगळल्लि साध्य-व्यापकता बंदितु, पक्षदल्लि साधनाऽव्यापकता बंदितु ( परमात्मनु पक्षनिरुत्ताने, आतनल्लि अपूर्णशक्त्यादिमत्वविल्ल ) स्वसत्तादौ परानपेक्षत्वं हीगे 'स्वतंत्रत्व' शब्दार्थ माडिदरे केनचिन्नियतत्वरूपसाध्यक्के परसापेक्षत्वरूप हेतु माडबेकायितु. ( साध्य मत्तु हेतु ओंदे आदवु; साध्यावैशिष्टचरूप दोष प्राप्तवायितु एंब तात्पर्य ). 'स्वतंत्र' शब्दक्के 'स्वेच्छाधीनप्रवृत्तिः' एंत टीकारायरु अर्थ बरेयुत्तारे. स्वेच्छाधीनप्रवृत्ति एंदरे तन्न इच्छामात्राधीनवाद प्रवृत्तियुळ्ळवनेंदु अर्थ माडतक्कद्दु. न्यायमतदल्लि द्रव्यत्वादिजातिगळिगे गुणादिपदार्थाधीनत्व. मायिमतदल्लि अनादिजीव ब्रह्मविभागक्के अविद्याधीनत्व हेगे हेळुत्तारो अदरंते भगवत्प्रवृत्तियु नित्यवादरू इच्छाधीनत्व कूडुत्तदे. ई स्वातंत्र्यलक्षणवु असांप्रदायिकवेंद-पक्षदल्लि, अनुव्याख्यानदल्लि स्वेच्छानुसारित्वक्केये स्वातंत्र्यवेंदेन्नतक्कद्देंदु हेळिरुत्तारे.

**टीकेय अर्थ**—रुद्रादिगळंते रमापतिगादरू चिच्चेत्यनियंतृत्व कूडुवदिल्लेंदेन्नतक्कद्दल्ल; एकेंदरे ईश्वरनु अपर्याप्तशक्त्यादिमत्वरूपहेतुगळ पक्षधर्मताबलदिंद पूर्णशक्त्यादिरूपदिंदले सिद्धनागुत्ताने एंब अभिप्रायदिंद

१ **रमापतिः नचिच्चेत्ययंता चेतनत्वात् रुद्रादिवत्** ई प्रतिपक्षानुमानदल्लि अपर्याप्तशक्तिमत्वादिरूप पूर्वोक्त हेतुगळिगे पक्षधर्मत्व ( रमापति निष्ठत्व ) हेळलु अपर्याप्तशक्तियुळ्ळ चिच्चेत्यनियामकनिगे अपर्याप्तशक्तिमत्व हेळुवदक्के बरुवदिल्ल. एकेंदरे हागे हेळलु रमापतिगादरू केनचिन्नियतत्व हेळबेकादीतु, हागे हेळलु प्रथमानुमानदल्लि व्यभिचार बरुत्तदे; आद्दरिंद अपर्याप्तशक्तिमत्वादिहेतुगळु चिच्चेत्यनिष्ठ एंदरे तन्नियामकनाद रमापतियु पूर्णशक्तियुळ्ळवनेंदु सिद्धवागुत्तदे.

सर्वत्राखिलसच्छक्तिः स्वतंत्रोऽशेषदर्शनः हीगे श्रीमदाचार्यरु अंदि-रुत्तारे. सर्वत्र सकलचिच्चेत्यानियमनविषयदल्लि; अखिलसच्छक्तिः पूर्ण-वाद मत्तु प्रतिबंधादिदोषरहितवाद शक्तियुळ्ळवनु; अशेषदर्शनः अशेष-विषयत्वविरुवदरिंद संपूर्णज्ञानउळ्ळवनु, सर्वज्ञनेंतर्थ.

**टीका—अत्राहुः । भवतु चेत्यं परमेश्वरनियतं । चेतनश्च संसारी । मुक्तस्तु नच केनापि नियतः । नियम्यनियामकभावस्य भेदव्याप्तत्वात् । नच मुक्तस्य कुतोऽपि भेदोस्ति प्रमाणाभावात् । व्यापकाभावेच व्याप्यनिवृत्तिरवश्यंभाविनीति ॥**

**वेदेशतीर्थर टिप्पणि**—चेतनश्च संसारीति ॥ परमेश्वरनियतइति पूर्वेणान्वयः । मुक्तास्त्विति ॥ नच सोपि संसारदशायां नियम्यएवेति वाच्यं । तथापि नित्येति नियंतृतायाः स्वरूपसंकीर्तनमित्युक्तेर्भवदभिमतनित्यनियंतृत्वस्यासिद्धिरिति भावः । नच मुक्तस्येति ॥ निवृत्ताविद्यकस्याविद्यकभेदस्याप्यसंभवादिति भावः ॥

**राघवेंद्रतीर्थर टिप्पणि**—चेतनास्त्विति ॥ मुक्तव्यावृत्त्यर्थस्तु-शब्दः । भवतु परमेश्वरनियतइत्यनुषंगः । कुतइति ॥ कस्मादपि वस्तुन इत्यर्थः । व्यापकेति ॥ भेदाभावे तद्व्याप्तनियंतृत्वस्याप्यभावइत्यर्थः । तत्राहेति ॥ एवं चोद्ये परिहारमाहेति तत्र मुक्तेश्वरभेदे प्रमाणमाहेति वाऽर्थः ॥

टीकेय अर्थ—( ई विषयदल्लि पूर्वपक्षकाररु हेळुवदेनेंदरे ) चेत्यवु ( जडवु ) परमेश्वरनियतवागलि, संसारियाद चेतननादरू परमेश्वरनियत-निरलि; मुक्तनु यारिंदलू नियतनागुवदिल्ल. ई मातिगे मोदलु शंकिसिकोंडु अनंतर अदक्के समाधान—संसारदशादल्लि मुक्तनादरू नियम्यनिरुत्तानें-

तेंदपक्षदल्लि नित्येति नियंतृतायाः स्वरूपसंकीर्तनं हीगे व्याख्यान माडिद्दरिंद नित्यनियंतृत्व सिद्धियागुवदिल्ल. नियम्यनियामकभाववु भेदव्याप्त इरुत्तदे ( भेदविद्दरे ईतनु नियामकनु, ईतनु नियम्यनेंदु तिळियुत्तदेंतर्थ )- मुक्तस्य मुक्तनिगे कुतोपि याव वस्तुविनिंदादरू नभेदोस्ति भेदविल्लः प्रमाणाभावात् भेदवदे एंबदक्के प्रमाणविल्ल. व्यापकाभावेच व्यापकरूप भेदवे इल्लदमेले व्याप्यानिवृत्तिः नियंतृत्वाभाववु अवश्यंभाविनी अवश्य ( अगत्य ) इरलिक्के बेकु. हीगे शंकिसलु 'तत्राह' एंबदरिंद परिहार हेळुत्तारे, अथवा मुक्तेश्वरभेदविषयदल्लि प्रमाणवंनु 'तत्राह' एंब वाक्यदिंद हेळुत्तारे ( तत्राह एंबपदक्के ) हीगर्थ माडिदरू चिंते इल्ल;

**मूल—विमतो भिन्नो मुक्तत्वात्। यदित्थं तत्तथा यथा संप्रतिपन्नः ॥**

**टीका—ननु ग्रंथोहि वादप्रक्रियया प्रवर्तते। शिष्यानुकंपया प्रवर्तनात्। वादेच—पृष्टेनागमए- वादौ वक्तव्यः साध्यसिद्धय इत्यंगीकारः। तत्कथमनुमानमुच्यते। सत्यं। आगमोप्यत्रार्थे अभिधास्यते। अनुमानं तु तदर्थावधारणार्थ- मुपोद्घातप्रक्रिययोपन्यस्तमित्यदोषः ॥**

**वेदेशतीर्थर टिप्पणि.**--तदर्थावधारणार्थमिति ॥ 'उपपत्य- वकाशोत्र ह्यागमार्थविनिर्णय' इति तत्रैवोक्तत्वादिति भावः। नन्वेवं प्रथममागममभिधायानंतरं तस्यान्यार्थं परेणाभिहिते स्वोक्तार्थनि- र्धारणायोपपत्तिर्वक्तव्या। तत्कथं प्रथमं तद्वचनमित्यत आह— उपोद्घातप्रक्रिययेति ॥

टिप्पणेय अर्थ ( वे. ती. ) ‘ तदर्थावधारणार्थं ’ एंब टीकेगे— आगमार्थ निर्णय माडुवदक्कागि उपपत्तिगे स्थळ कोडतक्कद्दु ( अनुमानवंनु हेळतक्कद्दु ) युक्तवेंदु कथालक्षणदल्लि हेळल्पट्टदे. परनु शंकिसुत्ताने— मोदलु आगमवंनु हेळि अनंतर अदक्के परनु अन्यार्थ हेळिद पक्षदल्लि स्वोक्तार्थ निश्चय माडुवदक्कागि उपपत्तिर्वक्तव्या उपपत्तियन्नु हेळतक्कद्दु. हीगिरलु प्रथमदल्लि अनुमानवंनु एके हेळिदरेंदरे उपोद्घातप्रक्रियया एंब वाक्यदिंद समाधान माडुत्तारे.

मूलार्थ—विमतः भिन्नवो अभिन्नवो एंब विरुद्धमति विषयवु ( ‘ विमत ’ एंब शब्ददिंद संसारदिंद मुक्तनु विवक्षितनागिरुत्ताने ) भिन्नः भेदविशिष्टविरुत्तदे; मुक्तत्वात् मुक्तत्वविरुवदरिंद. दृष्टांत–उभय-सम्मत निगडमुक्तनंते.

टीकेय अर्थ—शिष्यन मेलिन दयादिंद ग्रंथद प्रवृत्ति इरुवदरिंद ग्रंथवु वादप्रक्रियादिंद प्रवृत्तवागुत्तदे. वाददल्लि यावदोंदु प्रश्न माडलु अदक्के उत्तरवेंदु प्रथमतः आगमप्रमाणवे साध्यसिध्यर्थ हेळबेकु ( हीगे कथालक्षणदल्लि आचार्यरु हेळिरुत्तारे ). हीगिरलु इल्लि प्रथमतः अनुमान-वन्नु एके हेळिदरेंदु शंकिसिदरे ‘ सत्यं ’ एंदु अर्धांगीकार माडि सिद्धां-तकाररु उत्तर हेळुत्तारे–ई विषयदल्लि आगमप्रमाणवादरू हेळल्पडुत्तदे; अनुमानंतु अनुमानवु तदर्थावधारणार्थं वेदार्थ निर्णयक्कागि उपो-द्धातप्रक्रियया निर्वाहक संगतियिंद उपन्यस्तं प्रथमतः हेळल्पट्टितु, इत्यदोषः आदकारण दोषगळु याववू बरलिल्लवेंतर्थ.

टीका–अत्र ‘ विमत ’ इति संसारान्मुक्तो विव-क्ष्यते । तस्यात्मेत्येव ग्रहणे सिद्धार्था प्रतिज्ञा स्यात् । अद्वैतवादिनापि संसारिणो भिन्नत्वेना-भ्युपगतत्वात् । भेदस्य च पारमार्थिकत्वानौपा-

धिकत्वाभ्यामविशेषितत्वात् । मुक्त इत्येव तर्ह्युच्यतां । निगडमुक्तेन सिद्धार्थता स्यादिति चेत् तर्हि 'संसारान्मुक्त' इति वक्तव्यं । तथा कृते गौरवं स्यादिति चेत् न । विमतेरनेकविधत्वेन धर्मिविशेषानिश्चये साध्यविशेषोपादानादिना तन्निश्चयानुसरणेपि गौरवसाम्यात् । तथापि विनिगमनं कुत इति चेत् अर्थप्रतिपत्तिगौरवाच्छब्दगौरवस्य ज्यायस्त्वात् । सत्यं ॥

**टिप्पणि** ( वं. ती. ) ननु विमतिविषयतावच्छेदकं किंचिदस्ति नवा । आद्ये तदेव पक्षतावच्छेदकमस्तु । द्वितीये पक्षतावच्छेदकग्रहणानुपपत्तिरित्यत आह—अत्र विमत इतीति ॥ तथाच संसारान्मुक्तत्वमेव विमति विषयतावच्छेदकमिति भावः । विमति ग्रहणकृत्यंतूत्तरत्र स्वयमेव वक्ष्यति । 'विमत' इत्येव पक्षनिर्देश आवश्यक इति व्यवस्थापयितुं संभावितपक्षांतराण्युद्भाव्य दूषयति—तस्येत्यादिना । संसारान्मुक्तस्येत्यर्थः । अद्वैतवादिनापीति ॥ मायावादिना भास्करेणचेत्यर्थः । नन्वस्माभिः पारमार्थिकोऽनौपाधिको वा भेदः साध्यते । तथाच भेदमिथ्यात्ववादिनस्तत्सत्यत्वेपि तस्य सोपाधिकत्ववादिनो वा नसिद्धसाधनतेत्यत आह । भेदस्येति ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगित्वं पारमा-

---

१. ई ओंदे वाक्यद स्पष्टीकरण—**प्रतिपन्नोपाधिः** एंदरे शुक्तियल्लि तोरुवंथ रजतवेंदु ओंदु क्षण ग्रहिसु. **त्रैकालिकनिषेधः** एंदरे **रजतात्यंताभावः** हीगे अंदतायितु. इदरल्लि प्रतियोगिभूतरजतवु अपारमार्थिकवदे. अप्रतियोगि पारमार्थिकवेन्दु सहजवे आयितु. आदकारण वेदशतीर्थरु—**प्रतिपन्नोपाधौ त्रैकालिकनिषेधअप्रतियोगित्वं पारमार्थिकत्वं** एंदु अंदिरुत्तारे. इन्नु **उपाधिव्यतिरेकप्रयुक्त व्यतिरेकाप्रतियोगित्वमनौपाधिकत्वं** एंबदर स्पष्टीकरण—[ भास्करन मतवु ] उपाधियि-

र्थिकत्वं । उपाधिव्यतिरेकप्रयुक्त व्यतिरेकाप्रतियोगित्वमनौपाधिकत्वमिति विवेको द्रष्टव्यः । गौरवं स्यादिति । शब्दगौरवं स्यादित्यर्थः ॥

**श्रीराघवेंद्रतीर्थर टिप्पणि**—विमत इति भिन्नोऽभिन्नो वेति । विरुद्धमतिविषयः । संशयविषय इत्यर्थः । तत्र विशेष्याकांक्षायां हेतूक्तिलब्धमाह । अत्रेति ॥ नन्वत्रात्मेति वा मुक्त इति वा संसारान्मुक्त इति वा कुतो नोक्तं शब्दलाघवात्प्रतिपत्तिलाघवाच्चेत्यतः क्रमान्निराह । तस्येत्यादिना ॥ पारमार्थिकादिभेदस्य तेनानंगीकारान्नोक्तदोष इत्यत आह । भेदस्येति ॥ तथा विशेषणस्य व्यावर्त्याभावेन व्यर्थत्वादिति भावः । गौरवमिति ।' शब्दगौरवमित्यर्थः ॥

**श्रीश्रीनिवासतीर्थर टिप्पणियु**—ननु पारमार्थिकभेदसाधनान्नमायावादिना सिद्धसाधनतोद्भावयितुं शक्या । अनौपाधिकभेदसाधनान्नसोपाधिकतत्सत्यभेदवादिना भास्करेणापीति चेत्तत्राह । भेदस्यचेति ॥ गौरवं स्यादिति ॥ 'संसारान्मुक्त' इत्यस्य पंचाक्षरत्वात् 'विमत' इत्यस्य त्र्यक्षरत्वाच्छब्दगौरवं स्यादित्यर्थः । धर्मिविशेषानुक्तेरिति ॥ विमतेरनेकविधत्वेन धर्मिणि विमते नित्यत्वानित्यत्वरूपप्रकारविशेषस्य कोत्रविशेषस्यानुक्तेरित्यर्थः । गौरवेति ॥ प्रतिपत्तिगौरवेत्यर्थः । विनिगमनमिति ॥ उभयत्रापिगौरवसाम्ये संसारान्मुक्त इत्येव कस्माद्वक्तव्यमित्यर्थः । ज्यायस्त्वादिति ॥ प्रतिपत्तिगौरवस्य बुद्धिक्षोभकरत्वेन नीचतयाऽस्वीकार्यत्वात् शब्दगौरवस्य तदभावेन ज्यायस्त्वात् वरत्वेन तस्यैव स्वीकार्यत्वेन संसारान्मुक्त इत्येवोच्यतामित्यर्थः ॥

---

इरे भेदविरुत्तदे. उपाधियु इल्लदिरे भेदवु इरुवदिल्ल. **व्यतिरेक** एंदरे भेदविल्ल एंतर्थ. अर्थात **भेदाभावप्रतियोगित्वम् औपाधिकत्वं** एंत अंदंतायितु. अप्रतियोगित्ववु अनौपाधिकत्ववायितु.

ग्रंथगौरवक्कागि टिप्पणेगळ अर्थवु प्रत्प्रत्येक बरेयदे आदष्टरमट्टिगे टीकेय अर्थदल्लिये तरुत्तेने.

टीकेय अर्थ—अत्र एंदरे ई अनुमानदल्लि संसारदिंद मुक्तनादवनु 'विमत' शब्ददिंद विवक्षितनिरुत्ताने. 'विमत' एंब पक्ष निर्देश माडुवदु आवश्यकविरुत्तदेंदु स्थापना माडुवदर सलुवागि संभावितपक्षांतराणि एन्दरे संभविसुवंथ अन्यपक्षगळंनु उद्भाव्य एन्दरे हेळि अनुगळन्नु 'तस्य' एंब वाक्यदिंद दूषयति दूषण माडुत्तारे—तस्य एन्दरे संसारदिंद मुक्तनादंथ पुरुषनिगे, आत्मेत्येव ग्रहणे—आत्मशब्ददिंद ग्रहण माडिदरे सिद्धार्था प्रतिज्ञा स्यात् सिद्धसाधनताख्य दोष बरुवदु एकेन्दरे अद्वैतवादिनापि मायावादि मत्तु भास्करनिंदादरू संसारिणः संसारिपुरुषनिंद भिन्नत्वेनाभ्युपगतत्वात् संसारमुक्तनु भिन्ननिरुत्तानेंदु स्वीकृतवागिरुत्तदे.

पुनः शंका—पारमार्थिकादिभेदस्य पारमार्थिक अथवा अनौपाधिक भेदक्के तेनानंगीकारात् मायावादि अथवा भास्करनिंद अंगीकृतवागदे इदमूलक नोक्तदोषः सिद्धसाधनताख्य दोष बरुवदिल्लेंदु शंकिसिदरे भेदस्य एंब वाक्यदिंद टीकारायरु उत्तर कोडुत्तारे. भेदस्य एंदरे भेदक्के पारमार्थिकत्व हागु अनौपाधिकत्वगळिंद विशेषण कोट्टिल्ल (आ विशेषणक्के प्रयोजनविल्लदिद्दरिंद वैय्यर्थ्य बरुत्तदे एंत तिळिदु कोट्टिल्ल एंतर्थ) तात्पर्य---सिद्धसाधन दोष बरुत्तदे एंत अर्थ.

पुनः शंका—हागादरे 'आत्मा' इष्टे अन्नदे 'मुक्तात्मा' एंदु अन्निरि, पूर्वोक्त दोष बरुवदिल्ल; हीगे पूर्वपक्षियु अन्नलु सिद्धान्तकाररु 'मुक्त' शब्ददिंद निगडमुक्तनंनु ग्रहण माडिदरे पुनः सिद्धसाधनता दोष बरुत्तदेन्दु हेळलु पूर्वपक्षियु अन्नुत्ताने.—हागादरे 'संसारमुक्तः' एन्दु अन्निरि. याव दोष बरुवदिल्ल एन्देन्नलु सिद्धान्तकाररु हेळुत्तारे. हागन्नलु गौरव बरुत्तदे. हेगेन्दरे.—त्र्यक्षरात्मक 'विमत' शब्दक्किंतलु पंचाक्षरात्मक 'संसारमुक्त' शब्दवु दोड्डदिरुत्तदे. इदर मेले पूर्वपक्ष-

कारनु पुनः ' विमतियु ' अनेक प्रकार इरुवदरिंद ( सत्यत्व-मिथ्यात्व-अणुत्व-महत्व-नित्यत्व-अनित्यत्वाद्यनेकविधदिंद ) धर्मिविशेष निश्चय-वागदिरलु साध्यविशेषोपादान संसारिभेद, जडभेद इत्यादि ) दिंद निश्चय आदाग्यादरू अर्थ गौरव बरुवदरिंद दोष साम्य बंदितु. एन्दु शंकिसलु सिद्धान्तकाररु अन्नुत्तारे, हागादरे हीगेये अन्नतक्कद्देंदु विनिगमक-एनू इल्लद्दरिंद नीनु हेळिदन्तेये ' संसारमुक्तः ' हीगे एके अन्नबेकेन्दु प्रश्न माडलु पूर्वपक्षकारनु उत्तर कोडुत्ताने. एनेंदरे—अर्थप्रतिपत्ति गौरव-क्कितलू शब्दगौरववु लघु इद्ददरिंद ' संसारमुक्तः ' एन्दु अन्नुवदे उचित-वेन्दु पूर्वपक्षवन्नु दृढीकरिसलु सिद्धान्तकाररु ' सत्यं ' एन्दु अर्धांगी-कारमाडि उत्तर हेळुत्तारे.—

**टीका**—तथाप्यप्रसिद्धविशेष्यत्वाप्रसिद्धविशेपणत्व-सिद्धार्थत्व-प्रमाणबाधानां प्रतिज्ञादोपाणामुद्धरोप्यनेन संक्षेपतः कृतः स्यादित्येवमर्थं ' विमत ' ग्रहणं । तथाहि ॥

टीकेय **अर्थ**—अर्थ गौरव बंदरू ' विमत ' शब्दप्रयोगदिंद अप्रसिद्ध विशेष्यत्व, अप्रसिद्धविशेषणत्व, सिद्धार्थत्व, प्रमाणबाधादि ( ' आदि ' शब्ददिंद स्वव्याघात ) प्रतिज्ञादोषगळ निवारणवु संक्षेपदिंद (सामस्त्येन विना कृतं संक्षेपः ) माडिदंते आगुवदेंदु तिळिदु ' विमत ' ग्रहण माडिरुत्तारे. तथाहि अन्दरे अदन्ने उपपादन माडुत्तारे.

**टीका—यदि विशेष्यो मुक्तात्माऽप्रसिद्धः स्यात् तदा किमाश्रया विमतिः स्यात् । यदि च विशेषणं भेदोऽप्रसिद्धो भवेत्तदा किमुल्लेखिनी विमतिर्भवेत् । यदि वा भेदो मुक्तात्मनि सिध्दो बाधितो वा भवेत्तदाप्यन्यतरपक्षानिश्चयान्नविमतिः**

१ ( अर्थ तिळिदु उच्चरिसुवदु बुद्धिक्षोभकरविरुत्तदे; केवल शब्द उच्चरिसुवदु बुद्धिक्षोभकरवल्ल.

स्यात् । अस्तिचेयं । ततो नाप्रसिद्धविशेष्यत्वादीति । एतेनोदाहरणेपि संप्रतिपन्नग्रहणस्य साध्यसाधनवैकल्याद्युद्धारः प्रयोजनं व्याख्यातं । अन्यथा यथा निगडमुक्त इत्यवक्ष्यत् ॥

वेदेशतीर्थर टिप्पणियु—एतेनेति ॥ विमतग्रहणस्य सप्रयोजनत्वसाधनन्यायेनेत्यर्थः । यदि दृष्टांतः साध्यविकलः साधनविकलो वा स्यात्तदा साध्यवत्तया साधनवत्तया च संप्रतिपत्तिर्नस्यात् । अस्तिचेयं ततो नसाध्यवैकल्यादीति भावः । अन्यथेति ॥ यदि संप्रतिपन्नग्रहणस्य साध्यवैकल्याद्युद्धारो नप्रयोजनमित्यर्थः ॥

टीकेय अर्थ—यदि विशेष्ये मुक्तात्माऽप्रसिद्धः स्यात् मुक्तात्मा एन्त पक्ष माडिद्दरे विशेष्यभूत मुक्तात्मनु परवादिगे अप्रसिद्धनिरुत्तानेंतेंद पक्षदल्लि तदा किमाश्रया विमतिः स्यात् विमतियु याव विशेष्यवन्नु आश्रय माडुत्तितु ( अप्रसिद्ध विशेष्यत्व बरुत्तित्तेंब भाव ) यदिच विशेषणं भेदोऽप्रसिद्धो भवेत् मत्तु विशेषणवु एन्दरे साध्यभूत भेदवु अप्रसिद्ध विरुत्तदे एंतेंद पक्षदल्लि तदा किमुल्लेखिनी विमतिर्भवेत् विमतियु यावदन्नु उल्लेखन माडुत्तितु ! ( ताने अप्रसिद्ध इद्दु एरडने यावदन्नादरू साधनमाडि तोरिसलारदेंत अर्थवु; एन्दरे अप्रसिद्धविशेषणत्वरूप दोष बरुत्तित्तु एंतर्थ. ) इदरंते भेदवु मुक्तात्मनल्लि सिद्धविरुत्तदेंत परनु अंदपक्षदल्लि सिद्धार्थत्व एन्दरे सिद्धसाधनत्व बरुत्तित्तु. बाधितवेंदरे प्रमाणबाध बरुत्तित्तु. तदा एन्दरे आ कालदल्लि अन्यतर पक्ष निश्चय आदद्दरिंद ( सिद्धसाधनत्व अथवा प्रमाणबाध एरडरल्लि ओंदु निश्चयवादद्दरिंद ) विवादवे हुट्टुत्तिद्दिल्ल. अस्तिचेयं विवादवनक इरुत्तदे, 'ततो नाप्रसिद्धविशेष्यत्वादि' तस्मात् 'विमत' शब्द प्रयोग माडुवदरिंद अप्रसिद्धवीशेष्यत्वादि याव दोषवू प्राप्तवागुवदिल्ल. एतेन अंदरे 'विमत' ग्रहणके सप्र-

योजनत्व साधनन्यायदिंद उदाहरणदल्लादरू सप्रतिपन्नग्रहणक्के साध्य-साधनवैकल्योद्धाररूप प्रयोजनवंनु हेळिदंते आयितु. दृष्टांतवु साध्यार्वकिल अथवा साधन रहितवादरे संप्रत्तिपत्तियु इरुत्तिद्दिल्ल. संप्रतिपत्तियनक उंटु; कारण, साध्यवैकल्यादि दोष बरुवदिल्ल. अन्यथा एन्दरे संप्रतिपन्न ग्रह-णक्के साध्यवैकल्यादि प्रयोजन इल्लदिद्दरे श्रीमदानंदतीर्थरु ‘ यथा निगड-मुक्तः ’ एंत अनुत्तिद्दरु.

**टीका—नन्वत्र भेदः किं परमात्मप्रतियोगिकः साध्यः । उत जीवप्रतियोगिकः । अथवा जडप्रति-योगिकः, अहोस्वित्सकल प्रतियोगिकः । नाद्यः । परमात्मनि हेतोरनैकांत्यात् । संसाराभावलक्षण मुक्तत्वस्य तत्र सत्वात् ॥**

श्रीवेदेशतीर्थर टिप्पणि--ननु संसारप्रध्वंसाधिकरणत्व-लक्षणमुक्तत्वरूपहेत्वभावादेव नपरमात्मनि व्यभिचार इत्यत आह । संसाराभावेति ॥ संसारसंसर्गाभावेत्यर्थः । नन्वेवं निगड-मुक्तदृष्टांतः साधनविकलः । संसारसंसर्गस्यैव तस्मिन्सत्त्वादिति चेन्न तथात्वे घटो दृष्टांत इति वक्ष्यमाणत्वात् ॥

श्री वे. टि. अर्थ–( पूर्वपक्षकारनु शंकिसुत्ताने )–विमतो भिन्नो मुक्तत्वात् एंब अनुमानदल्लि संसारप्रध्वंसाधिकरणत्वलक्षण मुक्तत्वरूप हेतुवु इल्लदिरुवदरिंद परमात्मनल्लि व्यभिचार बरलिल्लवेंदु शंकिसिदरे टीकारायरु हेळुत्तारे–परमात्मनल्लि संसाराभावलक्षण मुक्तत्वरूप हेतु उंटु. परमात्मप्रतियोगिक भेद इल्ल. ( साध्य इल्ल एंतर्थ ), कारण व्यभिचार बंदितु. संसाराभाव एन्दरे संसारसंसर्गाभाव एन्तर्थ. हीगे अर्थ माडिदरे दृष्टांतभूत निगडमुक्तनल्लि संसारसंबंध इरुत्तदे, साधनवैकल्य बंदितु एंतें-दरे आ कालदल्लि घट दृष्टांतवेंदु हेळतक्कद्दु अदे.

**श्रीराघवेंद्रतीर्थर टिप्पणि**–एवं विमत इत्यादि पक्षदृष्टांत निर्देशाभिप्रायं व्यक्तीकृत्य भिन्न इति सामान्यतः साध्यनिर्देशाभिप्रायं व्यक्तीकरिष्यन् प्रतियोगिविशेषोपादानपक्षान् विकल्पपूर्वकं शंकित्वा निराह। नन्वित्यादिना मैवामिति पर्यंतेन ॥ अनैकान्त्यं व्यनक्ति। संसारेति ॥ तत्र-परमात्मनि। तद्ध्वंसस्य तत्राभावेपि ध्वंसात्यंताभावसाधारण्येन संसाराभावलक्षणस्येत्युक्तं। परमात्मनि संसारो नेत्यस्य तत्संसर्गाभावविषयत्वात्तत्संसर्गस्य तत्रालीकत्वात्। मुक्तेच बंधस्य भूतत्वेन तत्संसर्गाभावस्य ध्वंसरूपत्वात् संबंधाभावस्यैव संसाराभावत्वाद्भूतले घटोऽस्तीत्यत्र घटसंबंधसत्वमेव घटसत्वमिव। तत्संबंधाभावस्येव तदभावरूपत्वात्संसाराभावलक्षणेत्युक्तिर्युक्तेति ज्ञेयं ॥

श्री रा टि. अर्थ-( मोदलनेय वाक्यद अर्थवु टीकेय अर्थदल्लि बरुत्तदे ). परमात्मनल्लि संसारध्वंसविल्लादिद्दरू ध्वंसात्यंताभावसाधारण्यविवक्षादिंद 'संसाराभावलक्षणस्य' एंत टीकारायरु अंदरु. तात्पर्य एनायितेंदरे ध्वंसात्यंताभावसाधारण संसाराभावत्वाधिकरणत्व परमात्मनल्लि उंटु. 'परमात्मनि संसारो न' ई प्रतीतियु संसारात्यंताभावविषयकवदे. मुक्तनल्लि पूर्वदल्लि संसारबंध इरुवदरिंद संसारसंसर्गाभावक्के संसारध्वंसरूपत्व कूडुत्तदे. भूतलदल्लि घटोऽस्ति अंदरे घटसंबंधसत्ववे घटसत्ववेंतर्थ, घटसंबंधाभावक्के घटसत्वाभावरूपत्ववदे. प्रकृतदल्लि संसाराभाव अंदरे संसारसंसर्गाभाव ( अत्यंताभाव ) रूप अर्थ विवक्षित इरुत्तदेंब अभिप्रायदिंद सामान्यतः संसाराभावलक्षण मुक्तत्ववेंत टीकारायरु हेळिरुत्तारे ; कारण, अवरु हेळिद्दु युक्तविरुत्तदेंदु तिळियतक्कद्दु.

**टीकेय अर्थ.**–हीगे[1] ' विमत '[2] इत्यादि पक्ष-दृष्टांत निर्देशाभिप्राय-

१. ' इत्यादि ' शब्ददिंद ' संप्रतिपन्न ' एंब दृष्टांतवन्नु तेगेदुकोळ्ळबेकु.
२. ' विमत ' एंदु एके निर्देश माडिदरु, दृष्टांतदल्लि ' संप्रतिपन्नः ' एंब शब्दवन्नेके प्रयोगमाडिदरु एंब अभिप्रायवन्नेन्तर्थ.

वन्नु प्रकटमाडि 'भिन्नः' एंत सामान्याकारवागि साध्य निर्देश माडिद अभिप्रायवन्नु व्यक्त माडुवदक्के इच्छा उळळंथवरागि प्रतियोगिविशेषोपादानपक्ष[1]गळन्नु विकल्पगळन्नु शंकिसिकोंडु निराकरण माडुत्तारे. 'ननु' एंब वाक्यदिंद आरंभिसि 'मैवं' एंब वाक्यद तनक इद्द वाक्यदिंद—

'विमतः भिन्नः मुक्तत्वात्' ई अनुमानदल्लि परमात्मप्रतियोगिक भेदवु साध्यवो, जीवप्रतियोगिक भेदवु साध्यवो? मोदलनेय विकल्पवनक कूडुवदिल्ल. एकेंदरे, परमात्मनल्लि संसाराभावलक्षणमुक्तत्वरूप हेतु इरुत्तदे, अल्लि परमात्मप्रतियोगिक भेदरूप साध्यविल्ल. 'हेतु सत्वे साध्याभावो व्यभिचारः', एंब व्यभिचारलक्षणानुरोधदिंद अनैकांत्य बरुत्तदे.

**टीका.—द्वितीयेपि सकलजीवप्रतियोगिकः । स्वव्यतिरिक्त जीवप्रतियोगिकोवा । नप्रथमः । मुक्तस्यापि जीवत्वेनांशे बाधात् । नद्वितीयः । मुक्तस्य तद्भेदसिध्याविना तेषामेतद्व्यतिरिक्तत्वासिध्याऽप्रसिध्दविशेषणत्वात् । सिध्दौच सिद्धसाधनत्वात् । जीवभेदसाधनस्य प्रकृतानुपयुक्तत्वेनार्थांतरत्वाच्च एतेन संसारिभ्यो भेदः साध्यतइत्यपि परास्तं ॥**

* श्रीवेशतीर्थर टिप्पणि—मुक्तस्यापीति ॥ विमतो मुक्तः सकलजीवप्रतियोगिकभेदवान् इत्यत्र मुक्तस्यापि सकलजीवमध्यप्रविष्टत्वान्मुक्तेऽमुक्तजीवप्रतियोगिकभेदस्याबाधितत्वेपि मुक्तप्रतियोगिकभेदस्य बाधितत्वादंशे बाधित इत्यर्थः । सिद्धाविति ॥ मुक्तस्य स्वव्यतिरिक्त-सर्वजीवप्रतियोगिकभेदसिद्धावि-

---

१. 'भेद' एंदरे अन्योन्याभाव, अभावक्के प्रतियोगि बेकु. ई मातु विद्यार्थिगळु लक्ष्यदल्लिडतक्कदु.

* टिप्पणिगळु कठिणविद्दल्लि अर्थ बरेयुत्तदे, सुलभविद्दल्लि बरेयुवदिल्ल. अवुगळ अर्थवन्नु टीकेय अर्थदल्लि तरुत्तेने. इदर उद्देशवेनेन्दरे ग्रन्थगौरवभय.

त्यर्थः । प्रकृतानुपयोगित्वेनेति ॥ मुक्तेश्वरभेदस्य प्रकृतत्वादित्यर्थः । ननु संसारिभ्यो भेदसाधनान्नपूर्वोक्तदोष इत्यत आह । एतेनेति ॥ अर्थांतरत्वेनेत्यर्थः ॥

**श्रीराघवेंद्रतीर्थर टिप्पणि.**–अंशे बाधादिति भावः । सिद्धौचेति । मुक्ते जीवभेदस्येति जीवेषु मुक्तव्यतिरिक्तत्वस्येति वा योज्यं । अंत्यपक्षे अर्थात्तद्भेदस्य मुक्ते प्राप्तत्वादिति भावः । प्रकृतेति ॥ मुक्तस्तु नकेनापि नियत इत्यादिना मुक्तनियंत्रीश्वरैक्यस्य शंकितत्वेन तद्भेदसाधनस्यैव प्रकृतत्वादिति भावः । एतेनेति ॥ प्रकृतानुपयोगित्वेनेत्यर्थः ॥

टीकेय अर्थ–उत जीवप्रतियोगिकः एंब द्वितीयविकल्पदल्लि सकलजीवप्रतियोगिकः अथवा स्वव्यतिरिक्तजीवप्रतियोगिकः एंत विकल्पमाडल्पडुत्तदे. प्रथमविकल्प कूडुवदिल्ल; एकेंदरे मुक्तनल्लि जीवत्व इरुवदरिंद अवनु सकलजीवांतर्गतनादनु. मुक्तनल्लि अन्यजीवप्रतियोगिकभेद स्वभेद इल्लद्दरिंद अंशदल्लि बाध बंदितु. पक्षे साध्याभावो बाधः एंब न्यायदिंद साध्य बरलिल्ल एंतर्थ. स्वव्यतिरिक्तजीवप्रतियोगिकः एंब एरडने विकल्पवादरू कूडुवदिल्ल. एकेंदरे मुक्तनिगे स्वभिन्न जीवभेदसिद्धवागदले जीवरिगे मुक्तव्यतिरिक्तत्व सिद्धि आगुवदिल्ल. स्वव्यतिरिक्त जीवप्रतियोगिकभेदवु एल्लियू इल्लद्दरिंद अप्रसिद्धविशेषणता बरुत्तदे. मुक्तनल्लि जीवभेदवु, जीवरल्लि मुक्तव्यतिरिक्तत्ववु सिद्धविरुत्तदेंतेंद पक्षदल्लि सिद्धसानता बरुत्तदे. हागु 'मुक्तस्तु नच केनापि नियतः' इत्यादि वाक्यगळिंद मुक्तनियंत्रीश्वरैक्य शंकितवाद्दरिंद ईश्वरभेदसाधनेव प्रकृतविरुवदरिंद जीवभेदसाधनवु प्रकृत अनुपयोगि आयितु. आदकारण अर्थांतरता[1] बरुत्तदे. एतेन एंदरे अर्थांतरता बरुवदरिंद संसारिभ्यः एन्दरे संसारिगळ देशेयिंद भेदः साध्यते अन्दरे भेदवु साधनमाडल्पडुत्तदेंब मातु आदरू निरस्तवायितु. हेगेंदरे–मुक्तस्तु नच केनापि नियतः एंब मातु प्रकृतदल्लि बंदद्दरिंद नियम्यनियामक भावदिंद मुक्त मत्तु परमात्म इवरल्लि भेदविरुत्तदेंब मातु सचक्के साधिसतक्कद्दिरुत्तदे.

---

१ अजिज्ञासितअर्थकथनमर्थांतरता.

**टीका—अतएव न तृतीयः । नापि चतुर्थः । पूर्व-वदंशे बाधात् । अप्रसिद्धविशेषणत्वाच्च । मेवं ॥**

**श्रीवेदेशतीर्थर टिप्पणियु**—अतएवेति ॥ जडप्रातियोगिकभेदस्य प्रकृतानुपयोगित्वेनार्थांतरत्वादेवेत्यर्थः । पूर्ववदिति ॥ मुक्तस्यापि सकलमध्यप्रविष्टत्वादेवेत्यर्थः । अप्रसिद्धविशेषणत्वादिति ॥ सर्वत्रापि स्वभिन्नप्रातियोगिकभेदस्यैव सत्वेन सकलप्रातियोगिकभेदाधिकरणत्वासिद्धेरित्यर्थः । नन्वसति प्रसिद्धमिदं साध्यं । नच तदपि ‘सकल’ पदेन गृहीतामिति स्वोत्तरभेदएव तत्र स्यान्नसकलभेद इति वाच्यं । ‘सकल’ पदस्य वस्तुमात्रपरत्वादितिचेन्न । सर्वं मिथ्येत्युक्ते ब्रह्मणि प्रमाणबाधः शुक्तिरजतादौ सिद्धार्थताच स्यादित्याद्याचार्यवचनबलेनासतोपि सर्वपदपर्यायसकलपदसंग्राह्यत्वात् । एवं चासन्नप्रतीयेत इति मतेनेदमिति परिहारोत्र नमनोहर इति ध्येयं । यद्वा । सकलजीवप्रातियोगिको वा स्वव्यतिरिक्तसकलजीवप्रातियोगिकोवेति विकल्प्याद्ये अंशेबाधः । द्वितियेऽप्रसिद्धविशेषणतेति बोध्यं । अतएव पूर्ववदित्युक्तम् ॥

**अर्थ (वे. ती.)**—अतएव एन्दरे जडप्रतियोगिक भेदवु प्रकृतानुपयुक्त इद्दद्दरिन्द अर्तान्तरत्व बरुत्तदेन्तर्थ. पूर्ववत् एन्दरे मोदलिनन्ते मुक्तनिगे सकलमध्यप्रविष्टत्व इरुवदरिन्द अंशदल्लि बाध बन्दितु. अप्रसिद्ध विशेषणत्वात् एन्दरे सर्वत्रदल्लियू स्वभिन्नप्रतियोगिक भेदवे इरुत्तदे, सकलप्रतियोगिकभेदाधिकरणत्ववु एल्लियू इल्ल, अप्रसिद्धविशेषणत्व बन्दितेम्ब तात्पर्य. ‘नन्वसति प्रसिद्धमिदं साध्यं’ एम्ब वाक्यद अर्थ. (इदर मेले शङ्का यादद्दु बरुत्तदेन्दरे)—सकलप्रतियोगिकभेदाधिकरणत्ववु असत्तिनल्लि[1] प्रसिद्धवदे. सकलप्रतियोगिकभेदरूप साध्य इरलि एन्तेन्दरे आ असत्तादरू सकलान्त-

[1] असत् इदु सकलान्तःपाती अल्ल एम्ब अभिप्रायदिंद ई शङ्का तेगेदुकोळ्ळुत्ताने.

भूतवादकारण अल्लि स्वेतरसकलभेदवे इद्दीतु होर्तु, सकलभेद हेगे बरुत्तदेन्देरे 'सकल' शब्दक्के वस्तुमात्रपरत्व हेळुत्तवे; असत्तु वस्तुवागदे इद्दरिन्द सकलान्तर्भूतवागुवदिल्ल. तात्पर्यवेनेन्दरे असत्तिनल्लि सकलप्रतियोगिकभेदाधिकरणत्व प्रसिद्धवदे एम्ब मातु सिद्धवायितु. असत् इदु सकलान्तर्भूतवागुवदिल्ल एम्ब बग्गे पुष्टीकरणमाडि तोरिसुत्तारे. हेगेन्दरे— 'सर्वं मिथ्या' हीगे एनलु ब्रह्मनल्लि प्रमाणबाध बरुत्तदे. ('सर्व' शब्द सङ्कोच माडबेकायितेम्ब तात्पर्य) शुक्तिरजतादिगळल्लि सिद्धार्थतारूप दोष बरुत्तदेम्ब आचार्यवचनबलदिन्द असत्तिगादरू 'सर्व' पदपर्याय 'सकल' पददल्लि संग्रहण माडुवदक्के योग्यत्व प्राप्तवायितेन्तर्थ. सारांश— 'असन्नप्रतीयेत' एम्बुववर मतदिन्द इदु परिहार इरुत्तदे. इदु इल्लि मनोहर परिहारवल्लेन्दु तिळियतक्कद्दु. यद्वा अन्दरे अथवा भेदवु सकलजीवप्रतियोगिकवो अथवा स्वव्यतिरिक्त सकलजीवप्रतियोगिकवो हीगे विकल्प माडिदरे आद्य विकल्पपक्षदल्लि अंशे बाध बरुत्तदे. द्वितीयविकल्पग्रहणदल्लि अप्रसिद्धविशेषणता बरुत्तदेन्दु तिळियतक्कद्दु. अतएव एन्दरे आदकारण पूर्ववत् अन्दरू. ई एरडु विकल्पगळ स्पष्टीकरणवु 'द्वितीयेपि सकलजीवप्रतियोगिकः स्वव्यतिरिक्तसकलजीवप्रतियोगिको वा' एम्ब पूर्वदल्लि बन्द टीकावाक्यद अर्थ बरेयुव कालक्के बन्दु होगिरुत्तदे.

टीकेय अर्थ—अएतव एन्दरे जडप्रतियोगिकभेदक्के प्रकृतानुपयोगित्व इरुवदरिन्द अर्थान्तरत्व बरुत्तदे. आदकारण तृतीयविकल्प (अथवा जडप्रतियोगिकभेद) कूडुवदिल्ल, हागु चतुर्थ विकल्प ('आहोस्वित्सकलप्रतियोगिकः एम्बविकल्प) वादरू कूडुवदिल्ल; याकेन्दरे पूर्वदल्लि हेळिदन्ते अंशदल्लि बाध बरुत्तदे मत्तु अप्रसिद्धविशेषणत्व बरुत्तदेन्दरे अन्नकूडदु.

**टीका—अविवक्षितप्रतियोगिविशेषभेदस्य साध्यत्वात् । नचैवमर्थान्तरता । मुक्तस्य भेदमात्रानङ्गी-**

१ ई जगत्तु 'असत्' एन्त अन्नबेकादरे असत् अल्ल. याकेन्दरे असत् इद्द पक्षदल्लि तोरबारदु हीगे अन्नुववर मत एन्तर्थ.

**कारेणाक्षिपन्तंप्रति तत्साधनस्य सङ्गतत्वात्। अथवा प्रागवस्थायां येन भेदेन विशिष्टः तेनैव मोक्षेऽपीत्य-यमत्रार्थो विवक्षित इति नकश्चिद्दोषः ॥**

श्रीवेदेशतीर्थर टिप्पणियु कठिणविद्दरिन्दलू मत्तु बहळ इद्द-रिन्दलू अदन्नेल्ल ओम्मेले बरेदरे बालविद्यार्थिगळ ध्यानदल्लि एककालक्के बरलारदेन्दु तिळिदु टिप्पणेय ओन्दोन्दे वाक्यबरेदु अष्टष्टरदे अर्थ बरेयुत्तेने.

**टिप्पणियु** ( वे० ती० )–अविवक्षितप्रतियोगिविशेषस्येति। अतएव ' विमतो भिन्न ' इति सामान्योक्तिः ॥

**अर्थ**–अविवक्षितप्रतियोगिविशेषभेदसाध्यवु विवक्षित ( ग्रंथकर्तृरिगे हेळुव इच्छा ) इद्ददरिन्द ' विमतो भिन्नः ' हीगे सामान्यरीतियिंद निर्देश माडिदरु.

**टिप्पणियु**–अन्यथाऽस्माद्भिन्न इति विशेषनिर्देशः स्या-दिति भावः ॥

**अर्थ**–अन्यथा एन्दरे अविवक्षितप्रतियोगिविशेषभेदसाध्य ( अविव-क्षितप्रतियोगिविशेष एन्दरे संसारी अथवा मुक्त इत्यादि ) विवक्षा इल्लद पक्षदल्लि ग्रन्थकर्तृरु ' अस्माद्भिन्नः ' ( संसारिणो मुक्ताद्वा भिन्नः ) हीगे निर्देश माडुत्तिद्दरु.

**टिप्पणियु**–अस्मिन् पक्षे परमात्मा सपक्षएव तत्र परस्य व्यावहारिकभेदाङ्गीकारेण साध्यसंप्रतिपत्तेरिति ज्ञेयम् ॥

**अर्थ**–अस्मिन् पक्षे एन्दरे सामान्यसाध्यनिर्देशपक्षदल्लि परमात्मनु सपक्ष ( निश्चितसाध्यवान् सपक्षः ) निरुत्ताने. याकेन्दरे तत्र एन्दरे अवनल्लि परस्य एन्दरे परनिगे व्यावहारिकभेदाङ्गीकारेण एन्दरे व्यावहारिकभेदां-गीकारमाडुवदरिन्द ' साध्य सम्प्रतिपत्तेः ' साध्यवु सम्मताविरुत्तदे.

**टिप्पणियु**—नचैवं तर्हि ईश्वरस्याज्ञानाभावात्संसारिणैक्यं तेनानुभूयेतेत्यादिविपक्षबाधकतर्कोक्त्ययोग इति वक्तव्यम् ॥

अर्थ—एवं तर्हि एन्दरे अविवक्षितप्रतियोगिविशेषभेद साध्य माडिद पक्षदल्लि ईश्वरस्याज्ञानाभावात् एन्दरे ईश्वरनिगे अज्ञान इल्लदे इरुवदरिन्द संसारिणैक्यं तेनानुभूयेत एन्दरे ईश्वरनिंद संसारियिन्द कूडिकोण्डु ऐक्यानुभव माडल्पडलि. ई प्रकार विपक्ष ( ऐक्य ) बाधकतर्कोक्ति कूडुवदिल्लेन्देन्नबेड.

**टिप्पणि**—अस्मिन्पक्षे मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो वा मुक्तत्वं स्यादित्युक्तस्यैव विपक्षबाधकस्य ग्रहणादिति ॥

अर्थ—एकेन्दरे अस्मिन्पक्षे ( भिन्नः एन्त सामान्यसाध्यनिर्देशपक्षदल्लि ) ई पक्षदल्लि मुक्तामुक्तरिगे भेद इल्लदिद्दरे मुक्तनिगे संसारवू संसारिगळिगे मुक्तत्ववू बरबेकादीतु एन्त उक्तवाद मातिगेये विपक्षबाधकतर्क ग्रहण माडबेकु.

**टिप्पणियु**—ननु मुक्तस्य परमात्मप्रतियोगिकएव भेदः साध्यः । तस्यैव विप्रतिपत्तिविषयत्वात् ॥

अर्थ—मुक्तनिगे परमात्मप्रतियोगिकभेदवे साध्य माडबेकु. याकेन्दरे, अदे विवादविषय इरुत्तदे.

**टिप्पणि**—तत्र विमतो भिन्न इत्यविवक्षितप्रतियोगिविशेषभेदसाधनेऽर्थान्तरता स्यात् ॥

अर्थ—हीगिरलु ‘ विमतो भिन्नः ’ हीगे अविवक्षितप्रतियोगिविशेषभेद साध्य माडिदरे अजिज्ञासितअर्थ कथन माडिदन्तागि अर्थान्तरता बरुत्तदे.

**टिप्पणि**—विनिगमनाविरहेण ( विनिगमना प्र० ए० व० ) मुक्तेश्वरभेदासिद्धावपि भेदान्तरस्याप्यनुपयुक्तस्य सिद्धेरित्याशंक्य निषेधयति । नचैवमर्थान्तरतेति ॥

अर्थ-सामान्यतः साध्यनिर्देशमाडुवदरिन्द विनिगमक इल्लदन्तागि ( इन्थाद्दे साध्य ग्रहणमाडबेकेम्बदागि निश्चय इल्लदन्तागि ) मुक्तेश्वर-भेदसिद्धवादरू अनुपयुक्तभेदान्तर एन्दरे संसारि जडभेद इत्यादि सिद्ध आगुवदरिन्द अर्थान्तरता बरुत्तदेन्दु शंकिसिकोण्डु निषेध माडुत्तारे ' नचैवमर्थान्तरता ' एम्ब वाक्यदिन्द—

टिप्पणि—यद्वा ' विमतो भिन्न ' इत्यस्य परमात्मप्रतियोगिकभेदंविना जडादिभेदेनापि पर्यवसानेनार्थान्तरतामाशंक्य निराकरोति । नचैवमर्थान्तरतेति ॥

अर्थ—अथवा ' विमतो भिन्नः ' एम्बदक्के परमात्मप्रतियोगिकभेदद-होर्तु जडादिभेददिन्दादरू साध्यनिर्णय आगुवदरिन्द अर्थान्तरता बरुत्त-देन्दु शंकिसिकोंडु निषेध माडुत्तारे ' नचैवमर्थान्तरता ' एंब वाक्यदिन्द--

टिप्पणिः—मुक्तस्य भेदमात्रानङ्गीकारेणेति । अतएवाक्षेपावसरे नच मुक्तस्य कुतोपि भेदोस्तीत्युक्तमिति भावः ॥

अर्थ—' मुक्तस्य भेदमात्रानंगीकारेण ' एंब टीकेगे टिप्पणिकाररु बरेयुवदेनेन्दरे—अतएव-आदकरणवे आक्षेपावसरे-आक्षेप तेगेदुकोळ्ळुव कालक्के, नच मुक्तस्य कुतोपि भेदोस्तीत्युक्तम्-मुक्तनिगे याव वस्तुविनिन्दादरू भेदविल्लेन्दु अन्दिरुत्तारे.

टिप्पणि—नन्वनेनानुमानेन मुक्तस्य यस्मात्कस्माच्चिद्भेदमात्रं सिद्धं । नतु परमात्मप्रतियोगिक इत्यत आह । ईश्वरादिति ॥ मुक्तस्येति शेषः । ईश्वरभेदत्वेनेश्वरभेदस्त्वित्यर्थः ॥

अर्थ-ई अनुमानदिन्द मुक्तनिगे यावदो ओन्दरिन्द भेदमात्र सिद्ध वागुत्तदे; परमात्मप्रतियोगिक भेदवेनु सिद्धवागुवदिल्लेन्दु शंकिसिदरे ' ईश्वरात् ' एंब वाक्यदिन्द समाधान हेळुत्तारे. ' ईश्वरात् मुक्तस्य ' हीगे शेषपूर्ति माडिकोळ्ळबेकु. ' ईश्वरभेदत्वेन ईश्वरभेदः ' एन्त अर्थ.

टिप्पणि—ईश्वराद्भेदोप्यनुमानेनैव साध्य इति निर्बंधेत्वाह । अथवेति ॥ प्रागवस्थायां विद्यमानो भेद ईश्वरप्रतियोगिकोपि

ಭವತೀತಿ ತಸ್ಯ ಮೋಕ್ಷಪರ್ಯವಸಾಯಿತ್ವಸಾಧನೇ ಮುಕ್ತಸ್ಯೇಶ್ವರಾದ್ಭಿನ್ನತ್ವಮಪಿ ಸಿಧ್ಯತೀತಿ ಭಾವಃ ॥

ಅರ್ಥ–ಈಶ್ವರನ ದೆಸೆಯಿಂದ ಭೇದವು ಇದೆ ಅನುಮಾನದಿಂದ ಸಾಧಿಸಲಿಕ್ಕೆ ಬೇಕೆಂಬ ಬಗ್ಗೆ ನಿರ್ಬಂಧ ಮಾಡಿದರೆ ' ಅಥವಾ ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳುತ್ತಾರೆ. ಪ್ರಾಗವಸ್ಥಾಯಾಂ ಅಂದರೆ ಸಂಸಾರ ಅವಸ್ಥಾದಲ್ಲಿ ಯಾವ ಭೇದವು ಇರುತ್ತದೋ ಅದು ಈಶ್ವರಪ್ರತಿಯೋಗಿಕ-ವಾದರೂ ಆಗುತ್ತದೆ. ಅಂಥ ಈಶ್ವರಪ್ರತಿಯೋಗಿಕಭೇದಕ್ಕೆ ಮೋಕ್ಷಪರ್ಯವಸಾಯಿತ್ವ ಎಂದರೆ ಮೋಕ್ಷದಲ್ಲಾದರೂ ಇರುತ್ತದೆಂದು ಸಾಧಿಸಿದರೆ ಮುಕ್ತನಿಗೆ ಈಶ್ವರನ ದೆಸೆಯಿಂದ ಭಿನ್ನತ್ವ-ವಾದರೂ ಸಿದ್ಧವಾಗುತ್ತದೆಂಬ ಭಾವ.

ಟಿಪ್ಪಣಿ–ಯದ್ಯಪ್ಯಥವೇತಿ ಪಕ್ಷೇಽವಿಶೇಷಿತಪ್ರತಿಯೋಗಿಕಭೇದಸಾಧನ-ಪಕ್ಷತೋ ನಾರ್ಥಕೃತೋ ವಿಶೇಷೋಸ್ತಿ । ತತ್ರೇವಾತ್ರಾಪಿ ಮುಕ್ತೇ ಸಂಸಾರಿ·ಜಡೇಶ್ವರ ಭೇದಸಿಧ್ಯವೈಕಲ್ಯಾತ್ । ತಥಾಪಿ ಸರ್ವನಾಮ್ನಾಂ ಬುದ್ಧಿಸ್ಥಪ್ರಕಾರಾವಚ್ಛಿನ್ನ-ವಾಚಿತಯಾ ಪ್ರತಿಯೋಗಿವಿಶೇಷಾಲಿಂಗಿತತತ್ತದ್ಭೇದತ್ವರೂಪವಿಶೇಷಾಕಾರೇಣ ಭೇದೋಪಸ್ಥಿತಿರತ್ರೇತಿ ಪೂರ್ವಸ್ಮಾದ್ಭೇದ ಇತಿ ದ್ರಷ್ಟವ್ಯಂ ॥

ಅರ್ಥ–ಯದ್ಯಪಿ ' ಅಥವಾ ' ಎಂಬ ಪಕ್ಷದಲ್ಲಿ ಅವಿಶೇಷಿತಪ್ರತಿಯೋಗಿಕಭೇದ-ಸಾಧನಪಕ್ಷದ್ದೆಸೆಯಿಂದ ( ಅವಿವಕ್ಷಿತಭೇದಸಾಧನಪಕ್ಷದ್ದೆಸೆಯಿಂದ ಎಂತರ್ಥ ) ಅರ್ಥತಃ ವಿಶೇಷ ಇಲ್ಲ. ತತ್ರ ಇವ ಅತ್ರ ಎಂದರೆ ಅವಿವಕ್ಷಿತಪಕ್ಷದಲ್ಲಿ ಇದ್ದಂತೆ ಈ ' ಅಥವಾ ' ಎಂಬ ಪಕ್ಷದಲ್ಲಾದರೂ ಮುಕ್ತೇ ಎಂದರೆ ಮುಕ್ತನಲ್ಲಿ ಸಂಸಾರಿ-ಜಡೇಶ್ವರಭೇದಸಿದ್ಧಿವೈಕಲ್ಯ ಬರುವದಿಲ್ಲ, ತಥಾಪಿ-ಆದರೂ ಸರ್ವನಾಮ್ನಾಂ-ಸರ್ವನಾಮಗಳಿಗೆ ( ಯಚ್ಛಬ್ದ-ತಚ್ಛಬ್ದ-ಗಳು ವ್ಯಾಕರಣದಲ್ಲಿ ಸರ್ವನಾಮಗಳೆಂದೆನ್ನಿಸಿಕೊಳ್ಳುತ್ತವೆ. ) ಬುದ್ಧಿಸ್ಥಪ್ರಕಾರಾವಚ್ಛಿ-ನ್ನವಾಚಿತಯಾ-ಬುದ್ಧಿಸ್ಥ ವಿಷಯಪರಾಮರ್ಶಕತ್ವ ಇರುವದರಿಂದ ಪ್ರತಿಯೋಗಿವಿಶೇಷಾಲಿಂ-ಗಿತತತ್ತದ್ಭೇದತ್ವರೂಪ ವಿಶೇಷಾಕಾರದಿಂದ ಭೇದೋಪಸ್ಥಿತಿಃ ಎಂದರೆ ಭೇದವಿಷಯಕ ಜ್ಞಾನವು ಈ ' ಅಥವಾ ' ಎಂಬ ಪಕ್ಷದಲ್ಲಿ ಆಗುತ್ತದೆ ಆದಕಾರಣ ಪೂರ್ವಸ್ಮಾತ್ ಎಂದರೆ ಅವಿವ-ಕ್ಷಿತಪಕ್ಷವಿಶೇಷದ್ದೆಸೆಯಿಂದ ಈ ಪಕ್ಷವು ಬೇರೆ ಇರುತ್ತದೆ.

---

೧ ಸಂಸಾರಿದೆಸೆಯಿಂದ, ಜಡದ್ದೆಸೆಯಿಂದ ಅಥವಾ ಪರಮಾತ್ಮನ ದೆಸೆಯಿಂದ ಭೇದ; ಹೀಗೆ ಮನಸ್ಸು ಯಾವ ಪ್ರತಿಯೋಗಿವಿಶೇಷವನ್ನು ಗ್ರಹಣ ಮಾಡುತ್ತದೋ ಆ ವಿಶೇಷದಿಂದ ಎಂತರ್ಥ.

टिप्पणियु ( रा. ती. )–ननु प्रकृत ईश्वराद्भेदो नसिद्ध इत्यत आह । ईश्वरादिति ॥ आगमादिनेति ॥ ' तान्यहं वेद सर्वाणि ' इत्यादि वक्ष्यमाणागमेन ततएवाभ्रान्तत्वान्मुक्तस्यापि भेदनिवृत्तिरिति वाक्येन वक्ष्यमाणानुमानान्तरप्रत्यक्षाभ्यां- चेत्यर्थः ॥

टीकेयल्लि ' प्रागवस्थायां येन भेदेन विशिष्टः, एन्त इरुत्तदे, अदक्के श्रीश्रीनिवासतीर्थरु बरेयुत्तारे.–टिप्पणियु ( श्री. ती. )–येन भेदेन यत्प्रतियोगिकभेदेन विशिष्टः । अभूदिति शेषः । तेनैव-तत्प्रति- योगिकभेदेनैव ॥

टीकेय अर्थ–अविवक्षित प्रतियोगिविशेषभेद साध्य माडुव विवक्षा इद्दरिन्द ई ( विमतो भिन्नः एम्ब ) अनुमानदल्लि ' भिन्नः ' एन्त सामान्योक्तियिन्द हेळिदरु. मुक्तनिगे परमात्मप्रतियोगिकभेदवे साध्य माडबेकु, एकेन्दरे अदे विवादविषय इरुत्तदे. हीगिरलु ' विमतो भिन्नः ' एन्त अविवक्षितप्रतियोगिविशेषभेद साध्य माडिदरे अर्थान्तरता बरुत्तदे ( संसारि-जडभेद सिद्धवागुवदरिन्द अर्थान्तरता ) एन्त शन्किसिदरे टीका- रायरु हेळुत्तारे–नचैवमर्थान्तरता-अर्थान्तरता बरुवदिल्ल. एकेन्दरे मुक्तनिगे भेदमात्र ( यावद्भेद ) परनिन्द अनंगीकार इरुवदरिन्द आक्षेप माडुवनु कुरितु ( ' नच मुक्तस्य कुतोपि भेदोस्ति ' एन्त परनु पूर्वदल्लि आक्षेप तेगेदुकोण्डिरुत्ताने ) भेद साधिसुवदक्के सौलभ्यवागुत्तदे. पुनः शङ्का—ई अनुमानदिन्द मुक्तनिगे यावदो ओन्दु रीतियिन्द भेदमात्र सिद्धवागुत्तदे; परमात्मप्रतियोगिकभेदवेनु सिद्धवागुवदिल्लेन्दु शङ्किसिदरे टीकारायरु हेळु- त्तारे, ' ईश्वराद्भेदस्त्वागमादिना साधयिष्यते ' मुक्तनिगे ईश्वरप्रतियोगिक- भेदवु ' तान्यहं वेद सर्वाणि ' इत्यादि वक्ष्यमाण आगम हागु अनुमाना- न्तर मत्तु प्रत्यक्षप्रमाणदिन्द साधिसुत्तेवे. ईश्वरन देसेयिन्द भेदवु अनुमा- नदिन्दे साधिसबेकेम्बबग्गे निर्बन्धवंनु पूर्वपक्षकारनु माडिदरे अदक्के समा- धानवन्नु ' अथवा ' एम्ब वाक्यदिन्द टीकाकाररु हेळुत्तारे. हेगेन्दरे–

पूर्वावस्थादल्लि यत्प्रतियोगिक भेददिन्द मुक्तनु विशिष्टनो तत्प्रतियोगिक-भेददिन्द अवनु मोक्षदल्लादरू युक्तनिद्दाने एन्दरे याव दोषवू बरुवदिल्ल.

**टीका—ननु चात्र परमात्मा पक्षः सपक्षो विपक्षोवा । नाद्यः । परेण मुक्त-परमात्मभेदस्यानंगीकृतत्वेन द्वयोः पक्षीकरणासम्भवात् । अंगीकृतत्वेचानुमानवैयर्थ्यात् । नद्वितीयः । तत्र परस्य साध्यासम्मतेः । नतृतीयः । भेदाभावस्य वादिना काप्यनभ्युपगतत्वात् ॥**

टिप्पणि ( वे० ती० )—तटस्थः शंकते । नन्विति ॥ द्वयोरिति ॥ परमात्मनः पक्षत्वे मुक्त-परमात्मानौ भिन्नाविति पक्षीकरणीयं । तत्र द्विवचनार्थभेदासिद्धौ तथा पक्षीकरणासंभवः । तत्सिद्धौ सिद्धसाधनत्वापत्याऽनुमानवैयर्थ्यमिति भावः ॥

टिप्पणि ( रा० ती० )—' विमत ' इति निर्देशस्य कृत्यान्तरं वक्तुमाक्षिपति । नन्विति ॥ अनुमानवैयर्थ्यादिति ॥ तद्भेदस्यैव नियम्य-नियामकभावसिध्यर्थं सिषाधयिषितत्वादिति भावः ॥

टिप्पणि ( श्री० ती० )—द्वयोर्द्वित्वावच्छिन्नयोः पक्षीकरणेति॥ मुक्त-परमात्मानौ इति पक्षीकरणासम्भवादित्यर्थः । द्वित्वस्य भेदव्याप्तत्वादिति भावः ॥

टीकेय अर्थ—' विमत ' एन्त पक्षनिर्देशक्के कृत्यान्तरवंनु हेळुवदक्कागि आक्षेप माडुत्तारे; ' ननु ' एंब वाक्यदिन्द—ई अनुमानदल्लि परमात्मनु पक्षनो, सपक्षनो अथवा विपक्षनो? मोदलने विकल्पवनक कूडुवदिल्ल. एकेन्दरे, परमात्मनु पक्षनेन्दरे ' मुक्त-परमात्मानौ भिन्नौ ' हीगे पक्ष-साध्यगळंनु निर्देश माडबेकायितु. ' मुक्त-परमात्मानौ ' एम्बदरल्लि द्विव-

चनार्थदिन्द भेद सिद्धवागुत्तदे. परनु मुक्त-परमात्मभेद अंगीकार माडुवदिल्ल. कारण परमात्मनु पक्ष ( सन्दिग्धसाध्यवान् पक्षः ) एन्त अन्नलिक्के बरुवदिल्ल मुक्त-परमात्मरल्लि भेदांगीकार माडिदरे सिद्धसाधनता बरुवदरिन्द अनुमानवैयर्थ्य बरुत्तदे. एरडने विकल्पवादरू ( 'सपक्ष' एम्बदु ) कूडुवदिल्ल. परमात्मनल्लि परनु व्यावहारिकभेद अंगीकार माडिदरू मोक्षपर्यवसायिभेद स्वीकार माडुवदिल्ल. कारण निश्चितसाध्यवत्वरूप सपक्षत्व कूडुवदिल्ल. मूरने विकल्पवादरू 'विपक्ष'[1] एम्बदु ) सरियागुवदिल्ल. एकेन्दरे, वादियिन्द ( सिद्धांतकाररिन्द ) भेदाभावरूप अभेदवु एल्लियू अंगीकृतवागिल्ल.

**टीका—नैवं, पक्षत्वेपि परमात्मनः मुक्त-परमात्मानौ भिन्नावित्यपक्षीकरणात् । अतएवच 'विमतो भिन्न' इति विमतिविषयो यावानिति सामान्येनोक्तम् ॥**

**टिप्पणि** ( वे. ती. )–पक्षत्वेपि परमात्मन इति ॥ नन्वीश्वरं प्रागवस्थाया अप्रसिद्धत्वेन प्रागवस्थायां येनभेदेन विशिष्टस्तेनैव मोक्षेपीत्येतत्तत्र बाधितम् । प्रागवस्थाच संसारावस्थेति दृष्टान्तः साध्यविकल इति चेन्न । यतो बन्धदशायां येनभेदेन विशिष्ट इत्येव विवक्षितं नतु स्व ( संसार ) बन्धदशायामिति । तथाच नामसिद्धिर्नवा दृष्टान्तः साध्यविकल इति भावः ।

**टीकेय अर्थ**—परमात्मनिगे पक्षत्व हेळिदरू 'मुक्त-परमात्मानौ भिन्नौ' हीगे निर्देश माडिदरे पूर्वोक्तदोष ( सिद्धसाधनता ) बन्दीतु, ई दोष बरबारदेन्दु तिळिदु पूर्णप्रज्ञरु 'विमतः' एन्त पक्षनिर्देश माडिरुत्तारे. विमत एन्दरे यावद्विवादविषय एन्त सामान्यतः उक्तवायितु.

**टीका—ननु मुक्तत्वं संसारप्रध्वंसोवा तत्संसर्गाभावोवा । नाद्यः । परमात्मन्यसिद्धेः । निगडमुक्ता-**

१ निश्चितसाध्याभाववान्विपक्षः हीगे विपक्षद लक्षण इरुत्तदे.

**दिदृष्टान्तस्य साधनवैकल्यापत्तेश्च । अतएव नद्वितीयोपीति । मैवं । अविवक्षितविशेषबन्धसंसर्गाभावस्य हेतुत्वात् ।**

**टिप्पणि ( वे. ती. )**—मुक्तत्वहेतौ दूषणदानाय प्रकृत्यर्थं तावत्पृच्छति । नन्विति ॥ तत्संसर्गाभावोवेति ॥ तत्संसर्गावच्छिन्नप्रतियोगिकाभावोवेत्यर्थः । परमात्मन्यसिद्धेरिति ॥ ध्वंसस्य प्रतियोगिसमानाधिकरणत्वेन संसारध्वंससत्वे संसारस्यापि प्राप्तेरित्यर्थः । अतएवेति ॥ साधनवैकल्यादेवेत्यर्थः । अविवक्षितविशेषेति ॥ अविक्षितविशेषश्चासौ बन्धश्चेतिविग्रहः । बन्धसंसर्गाभावेत्युक्त्या कथमुक्त दोषपरिहार इत्यत इदमुक्तं । निगडबन्धस्यापि बन्धत्वात्तन्मुक्ते बन्धसंसर्गाभावोस्तीति नदृष्टान्तः साधनविकल इति भावः ॥

**टिप्पणि ( रा. ती. )**–एवं प्रतिज्ञां परिष्कृत्य हेतुं शंकापूर्वं परिष्करोति । नन्वित्यादिना नपरमात्मनि व्यभिचार इत्यन्तेन । अतएवेति॥ साधनवैकल्यादेवेत्यर्थः। अविवक्षितेति॥ अविवक्षितो विशेषो निगड-संसारादिरूपो यस्य-बन्धस्य तत्संसर्गाभाव इत्यर्थः।परमात्मनि बन्धमात्रसंसर्गाभावमादाय मुक्ते संसारसंसर्ग ध्वंसमादाय दृष्टान्तेच निगडध्वंसमादाय हेतुसिद्धिरिति भावः

**टीकेय अर्थ**—मुक्तत्व हेतुविगे दूषण कोडुवदक्कागि ‘ मुक्त ’ शब्दार्थ विचार माडुत्तारे ‘ ननु ’ एम्ब वाक्यादिन्द—मुक्तत्व अन्दरे संसारध्वंसवेन्देनुत्तीया अथवा संसारसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः एन्त हीगे अन्नुत्तीया ? मोदलने विकल्प कूडुवदिल्ल. याकेन्दरे ध्वंसवु प्रतियोगिसमानाधिकरणविद्दकारण परमात्मनल्लि संसारध्वंस इरुत्तदेन्दरे तत्प्रतियो-

१. प्रातिपदिकार्थ एन्दरे मूलशब्दद अर्थ. उदाहरण–‘ रम् ’ धातु घञन्त आगि राम ’ एन्त एनु आगुत्तदे अदे प्रातिपदिक.

गिभूत संसारवादरू प्राप्तवागबेकायितु. परमात्मनिगे संसारवनक इल्ल, कारण असिद्धि बन्दितु. मुक्त-निगडमुक्तदृष्टान्तदल्लि संसारविद्दरिन्द संसार-ध्वंसरूप मुक्तत्व बरलिल्ल, कारण साधनवैकल्य बन्दितु. साधनवैकल्य बरुवदरिन्द एरडने विकलवादरू कूडुवदिल्ल. ह्यागन्दरे—निगडमुक्त एन्दरे बन्धमुक्तनल्लि संसारात्यन्ताभावविल्ल हीगे शंका बरलु ‘ मैवं ’ एम्ब वाक्य-दिन्द समाधान हेळुत्तारे. एनेन्दरे, अविवक्षितविशेषबन्ध संसर्गाभावक्के हेळुतेवे. ( विशेष स्पष्टीकरण ) टीकेयल्लि अविवक्षितविशेषबन्ध संसर्गा-भाववेन्त इरुत्तदे अदक्के श्रीराघवेन्द्रतीर्थरु बरेयुत्तारे ‘ अविवक्षितो विशेषो-निगडसंसारादिरूपो यस्य बन्धस्य तत्संसर्गाभाव इत्यर्थः ’ इदर अर्थ—यस्य बन्धस्य-यावबन्धद विशेषो निगडसंसारादिरूपः एन्दरे निगड संसाररूप विशेषवु अविवक्षितः एन्दरे अविवक्षित अदेयो तत्संसर्गाभाव इत्यर्थः एन्दरे अन्थ अविवक्षित विशेषबन्धसंसर्गाभाव एन्तर्थ. श्रीराघवेन्द्रतीर्थर टिप्पणे-यल्लि हेतु सिद्धमाडि तोरिसिरुत्तारे, हेगेन्दरे—परमात्मनि बन्धमात्रसंसर्गा-भावमादाय मुक्तेसंसारसंसर्गध्वंसमादाय दृष्टान्तेव निगडध्वंसमादाय हेतुसिद्धिरिति भावः । इदर अर्थ—परमात्मनल्लि बन्धमात्र ग्रहण माडि ( यावद्बन्धवेन्तर्थ ) मुक्तनल्लि संसारप्रध्वंस स्वीकरिसि, निगडमुक्तनल्लि निगड एन्दरे बन्ध इन्थ बन्धसंसर्गाभववन्नु तेगेदुकोण्डु असिद्धि परिहार माडिकोळ्ळबेकु.

**टीका—ननु चात्र बन्धाभावाधिकरणत्वं हेतुः अभावाधिकरणत्वमात्रेणालं । केवलान्वयित्वेन विशेषणव्यावर्त्याभावात् ॥**

**टिप्पणि** ( वे० ती० )—अधिकरणार्थक ‘ क्त ’ प्रत्ययपर्यालो-चनया विवक्षितहेतुशरीरे वैयर्थ्यमाशंकते । नन्विति ॥ केवलान्वयित्वेनेति ॥ साध्यस्य केवलान्वयित्वेनाभावाधिकरण-त्वमात्रस्य व्यभिचाराभावात् । बन्धविशेषणव्यावर्त्याभाव इत्यर्थः । व्यावर्त्य-कृत्य-प्रयोजन-फल एन्तर्थ.

टिप्पणि ( रा० ती० )—तत्संसर्गाभावएव तदभाव इत्युपे-त्याह । बन्धाभावाधिकरणत्वंहीति ॥ केवलान्वयिसाध्यकत्वेन विपक्षशून्यतया अनैकान्त्यशंकायोगेन बन्धेति विशेषणकृत्याभावादित्यर्थः ॥

ಟೀಕೆಯ ಅರ್ಥ—' ಮುಕ್ತ ' ಈ ಶಬ್ದದಲ್ಲಿ ಅಧಿಕರಣಾರ್ಥಕ ( ಬಂಧಾಭಾವಾಧಿಕರಣ ) ' ಕ್ತ ' ಪ್ರತ್ಯಯಾರ್ಥದ ವಿಚಾರವಾದರೂ ಹೇತುಶರೀರದಲ್ಲಿ ವೈಯರ್ಥ್ಯ ಬರುತ್ತದೆಂದು ಪರನು ಶಂಕಿಸುತ್ತಾನೆ. ಹೇಗೆಂದರೆ ಟೀಕಾವಾಕ್ಯ—ननु चात्र बंधाभावाधिकरणत्वं हेतुः । ಅರ್ಥ—ಮುಕ್ತತ್ವ ಅಂದರೆ ಬಂಧಾಭಾವಾಧಿಕರಣತ್ವಂ ಎಂತೆಂದಹಾಗಾಯಿತು, ಇದೆ ಹೇತು ಇರುತ್ತದೆ. ಇದರಲ್ಲಿ ' ಅಭಾವಾಧಿಕರಣತ್ವಂ ' ಇಷ್ಟೆ ಹೇತುವು ಸಾಕು ಎಕೆಂದರೆ ಹೇತು ಕೇವಲಾನ್ವಯಿಸಾಧ್ಯಕ ಆದ್ದರಿಂದ ವಿಪಕ್ಷಶೂನ್ಯತ್ವ ಬಂದಿತು, ಕಾರಣ ವ್ಯಭಿಚಾರಶಂಕಾ ಕೂಡುವದೆ ಇಲ್ಲ, ಬಂಧವಿಶೇಷಣಕ್ಕೆ ವೈಯರ್ಥ್ಯ ಬರುತ್ತದೆ.

**टीका—अपि चाधिकरणत्वमात्रेणालं । किमभाव ग्रहणेन ॥**

ಟೀಕೆಯ ಅರ್ಥ—' ಅಭಾವಾಧಿಕರಣತ್ವಾತ್ ' ಎಂಬದರಲ್ಲಾದರೂ ' ಅಧಿಕರಣತ್ವಾತ್ ' ಇಷ್ಟೆ ಹೇತು ಇರಲಿ ' ಅಭಾವ ' ಪದ ಬೇಡ

**टीका—किंच अधिकरणं कारकविशेषः ( तत्र किं विशेषग्रहणेन । एवं कारकं कारणविशेषः तत्र किं विशेषग्रहणेनेति । मैवं । ) कारकत्वमात्रेणालं किं विशेषग्रहणेन ॥**

टिप्पणि ( रा० ती० )—कारकविशेष इति । कर्तृ-कर्म-करण-सम्प्रदानापादानाधिकरणरूपषट्कारकेषु कारकान्तराणीवेदमपि कारकविशेषः क्रियाहेतुविशेष इत्यर्थः ॥

---

೧ **सङ्ख्यामधिकरण-प्रतियोगिभ्यामभावो निरूप्यते** ಎಂತ ಇದ್ದರಿಂದ ' ಅಭಾವ ' ಪದ ಬಂದುಹೋಗುತ್ತದೆ ಕಾರಣ ಆ ಶಬ್ದದ ಅಗತ್ಯವಿಲ್ಲೆಂಬ ಭಾವ.

टीकेय अर्थ—मत्तु ' अधिकरणत्वात् ' एम्बदरल्लि अधिकरण एन्दरे ' कारकविशेष ' एन्त इरुवदरिन्द ' कारकत्वात् ' इष्टे साकु ' विशेष ' पद प्रयोजनविल्ल.

**टीका—एवं कारकं कारणविशेषः । कारणत्वमात्रेणालं । तत्किं विशेषेणेति । मैवं । तथासति प्रमेयत्वादीनामपि केवलान्वयित्वभंगप्रसंगात् ॥**

टिप्पणि ( वे० ती० )—कारकं कारणविशेष इति । क्रियां कुर्वद्धि कारकमिति क्रियारूपकार्यविशेषजनकस्यैव कारकत्वादिति भावः ( क्रियारूपफलजनकं कारकं कारणं च ि याफलोपधानाभावेपि स्वरूपयोग्यस्य साधारणमिति कारकं कारणविशेष इत्यर्थः ) । केवलान्वयित्वभंगप्रसंगादिति । केवलान्वयिसाध्यकानुमानभंगप्रसंगादित्यर्थः ॥

टिप्पणि ( रा० ती० )—प्रमेयत्वेति । शब्दोऽभिधेयः प्रमेयत्वाज्ज्ञेयत्वादित्यादीनामित्यर्थः ॥

टीकेय अर्थ—एवं अन्दरे इदरन्ते कारकं कारणविशेषः एन्दरे कारकवु कारणविशेष इरुत्तदे ( स्पष्टीकरणद बग्गे टिप्पणी नोडु ) आदकारण कारणत्वरूप इष्टे हेतुवु साकु, ' विशेष ' पद बेड. हीगे पूर्वपक्ष बरलु ' मैवं ' एम्ब वाक्यदिन्द समाधान हेळुत्तारे. एनेन्दरे—हागे अनबेड. एकेन्दरे ' शब्दोऽभिधेयः प्रमेयत्वाज्ज्ञेयत्वात् ' इत्यादि केवलान्वयिसाध्यक अनुमानभंग आगबेकादीतु.

**टीका—प्रमाविषयत्वं प्रमेयत्वं । तत्र विषय ( त्वेनालं ) त्वमात्रेणालं । किं प्रमाग्रहणेनेत्यादेस्तत्रापि सुवचनत्वात् ॥**

टिप्पणि ( वे० ती० )—विषयत्वेनालमिति । तावन्मात्रस्याभिधेयत्वेन व्यभिचाराभावादिति भावः । इत्यादेरित्यादिपदेन

विषयत्वं स्वरूपसम्बन्धविशेषः । तत्र स्वरूपत्वेनालं किं विशेष ग्रहणेनेत्यादिपरिग्रहः ॥

टीकेय अर्थ—केवलान्वयिसाध्यक अनुमानभंग आगबेकादीतेन्दु मेल हेळितु. अदु हेगेन्दरे—प्रमेयत्व एन्दरे प्रमाविषयत्व. इल्लि 'विषयत्व मात्र इरलि, 'प्रमा' एम्बदु बेड. हीगे 'शब्दोऽभिधेयः प्रमेयत्वात्' एम्ब अनुमानदल्लि हेळुवदक्के बरुत्तदे. 'आदि' पद सम्बन्धदिन्द विशेष अर्थवनु टिप्पणिकाररु हेळिरुत्तारे अदनु नोडु.

**टीका—यद्धेतु ( व्यावर्तकत्वे ) व्यवच्छेदकत्वेन पृथगुपादीयते तदेव विशेषणं प्रयोजनांतरमपेक्षते । नपुनस्तन्मात्रांतर्गतमिति चेत् । समं प्रकृतेपि । अथवा संसारसंसर्गाभावो मुक्तत्वं, तथात्वे घटो दृष्टांतः । परमात्मप्रतियोगिको वा भेदोत्र साध्यः । बंधप्रध्वंसाधिकरणत्वं च मुक्तत्वमिति नपरमात्मनि व्यभिचारः ।**

टिप्पणि ( वे० ती० )—यद्धेतुव्यावर्तकत्वेनेति । यथा सामान्यवत्त्वेस ( त्यस्मदादिवा ) ति बाह्येंद्रियग्राह्यत्वादित्यादौ सत्यंतं नहेतुशरीरमात्रांतर्गतं । प्रमा च प्रमाविषयत्वरूपहेतुशरीरांतर्गतैव । तस्याखंडोपाधित्वेनाभिधेयत्वनिरूपितव्याप्तेर्विशिष्टानिष्ठत्वात् । अतएव यन्निरूपित व्याप्तिपर्येन विशेषणेन विना नगृह्यते तदेव विशेषणं सार्थकमिति वदंतीत्यर्थः । मुक्तत्वमिति । मुक्त्यधिकरणत्वरूपहेतुप्रविष्टमुक्तिपदार्थ इत्यर्थः । नन्वेवं निगडमुक्तदृष्टांतः साधनविकल इत्यत आह ॥ तथात्व इति ॥ परमात्मप्रतियोगिकोवेति । ननु परमात्मनोपि पक्षत्वेनांशे बाध इति चेन्न। अस्मिन्पक्षे परमात्मनो विपक्षत्वेनांगीकारात् । अतएव तत्र बंध-

संसर्गाभावस्य संसारसंसर्गाभावस्य वा हेतोर्व्यभिचारमाशंक्य दूषयति ॥ बंधेति । अस्मिन्पक्षे मुक्तामुक्तयोरित्यादिकमेव विपक्षे बाधकमिति ज्ञेयं ॥

**टिप्पणी** ( रा० टी० ).—यद्धेतुव्यवच्छेदकत्वेनेति । हेतौ व्यावर्तकत्वेनेत्यर्थः । निगडमुक्ते साधनवैकल्यादाह ॥ तथात्व इति । पूर्वं परमात्मनोपि पक्षकोटितोक्ता । अधुना मुक्तमात्रमेव पक्ष इति भावेनाह ॥ परमत्मेति ॥ नव्यभिचार इति । तत्रहेतोरेवाभावादिति भावः । निगुडमुक्ते साध्य-साधनहीनता च नेत्यपि ध्येयं ।

टिप्पणिगळ अर्थ टीकेय अर्थदल्लि तरुत्तेने.

**टीकेय अर्थ.**—याव विशेषणवु हेतुकोटियल्लि इतरव्यावर्तकवेंत स्वतंत्रत्वेन उपात्तवागि इरुत्तदेयो अदे विशेषणवु प्रयोजनवन्नु अपेक्षिसुत्तदे, तन्मात्रांतर्गतवादद्दक्के प्रयोजनापेक्षा इल्ल, इदु केवलवाक्यार्थवायितु, मनदट्टवागलिल्ल कारण उदाहरण कोट्टु स्पष्ट माडुत्तेने. उदाहरण—' रूपरहितत्वेसति स्पर्शवत्वं वायोर्लक्षणं ' एंत वास्तविक वायुलक्षणविरुत्तदे. इल्ले ' स्पर्शवत्वं वायोर्लक्षणं ' एंत इट्टे अंदरे पृथिव्यादित्रिकदल्लि अतिव्याप्ति बरुत्तदे, कारण रूपरहितत्व विशेषण कोडतक्कद्दु. ' केवलरूपरहितत्वं वायोर्लक्षणं ' एंत अनलु आकाशादिपंचकदल्लि अतिव्याप्ति, तस्माद्रूपरहितत्व मत्तु स्पर्शवत्व इवेरडू विशेषणगळु सप्रयोजनवादवु. प्रकृतदल्लि प्रमा-इदु प्रमाविषयत्वरूप हेतुशरीरांतर्गतविरुत्तदे, अदक्के अखंडोपाधित्व[1] विरुवदरिंद अभिधेयत्वनिरूपित व्याप्तियु प्रमाविषयत्वरूप विशिष्टहेतुनिष्ठवागिरुत्तदे. अतएव ' यन्निरूपितव्याप्तिर्येन विशेषणेनविना नगृह्यते तदेव विशेषणं सार्थकं ' एंत ज्ञानिगळु अन्नुत्तारे. सांप्रतक्के प्रमारूपविशेषणवु

१ ' आत्मत्व ' एंबदु जाति हांगु आकाशत्वादिगळु अखंड उपाधिगळु इरुत्तवे. इवुगळ ज्ञानवागबेकादरे एरडने पदार्थद ज्ञान बेड. बेकु एंदरे ' आत्मत्वत्व ' ज्ञान बेकार्दातु. इदु ह्यागो अदरंते ' प्रमाविषयत्व ' एंबुवदु अखंडउपाधि इरुत्तदे, इदक्के एरडने विशेषणज्ञान बेड.

पृथगुपात्तवागिल्ल, इदक्के प्रयोजनापेक्षा इल्ल. कारण प्रमेयत्वादिगळिगे केवलान्वयित्व भंगप्रसंग बरुवदिल्ल. हीगे पूर्वपक्ष प्राप्तवागलु 'समं प्रकृतेपि' एंत सर्वज्ञकल्पराद टीका कृत्पादरु उत्तर हेळुत्तारे—' बंधाभावाधिकरणत्वं-हेतुः ' ई लियादरू बंध-अभावादि पदगळु हेतुशरीरमात्रांतर्गतगळादप्रयुक्त प्रयोजनांतरापेक्षा इल्ल, वैयर्थ्य बरुवदिल्ल. इन्नु ' अथवा संसारसंसर्गाभावो मुक्तत्वं एंब टीकावाक्यद अर्थ—अथवा ' मुक्तत्व ' अंदरे संसारसंसर्गाभाववेंत अर्थमाडबेकु. हीगे माडिदरे निगडमुक्त दृष्टांतदल्लि साधनवैकल्य बरुत्तदल्ल. एंदरे ' घट ' दृष्टांत माडबेकु. इन्नु ' परमात्मप्रतियोगिकोवा-भेदोत्र साध्यः ' एंब टीकावाक्यद अर्थ—पूर्वदल्लि परमात्मनिगादरू पक्ष-कोटित्व हेळिनु, ईग मुक्तमात्र पक्षवेंब भावदिंद हेळुत्तारेः—परमात्मप्रति-योगिकभेद साध्यमाडुत्तेवे हांगु बंधप्रध्वंसाधिकरणत्वरूप मुक्तत्व हेतु माडुवदरिंद परमात्मनल्लि हेतुविल्ल; साध्यवादरू इल्ल, कारण व्यभिचार बरुवदिल्ल. हागु निगडमुक्त दृष्टांतदल्लि हेतु साध्यविरुवदरिंद साध्यसाधन-वैकल्यरूप दोषवादरू बरुवदिल्ल.

**टीका—स्यादेतत् । किमनिर्वचनीयो भेदः साध्यते । किंवा पारमार्थिकः । नाद्यः । अपसिद्धांतात् । नद्वितीयः । परंप्रति दृष्टांतस्य साध्यवैकल्यादित्यत आह—**

## नच भेदे विकल्पो युज्यते ॥ ३ ॥

टीकेय अर्थ—पूर्वपक्षकारनु शंकिसुत्ताने—नीवु मेले हेळिद्दु कूडीतु, परंतु ई अनुमानदल्लि अनिर्वचनीयभेद साध्यवो अथवा पारमार्थिकभेद साध्यवो? अनिर्वचनीयभेद साध्यवेंत अन्नलिक्के बरुवदिल्ल. याकंदरे, निमगे अपसिद्धांत बरुत्तदे. पारमार्थिकभेद साध्यवेंदरे ननगे[1] निगडमुक्त दृष्टांतदल्लि साध्यवैकल्य बरुत्तदे (दृष्टांतदल्लि पारमार्थिकभेद इल्लवेंब

१ सिद्धांतकाररु.

टिप्पणि ( रा. ती. )–न कोपीति । आत्मज्ञानत्वेनाभिमतस्य तज्ज्ञानत्वाभावप्रसंगो वा । अज्ञाननिवृत्त्यभावप्रसंगो वाऽज्ञानस्यैवा-भावप्रसंगो वा नेत्यर्थः ॥

टीकेय अर्थ–आत्मनिगे दृक्कर्मत्व ( दृग्विषयत्व ) इल्लदे इद्दरू वेदांत-वाक्यगळिंद पुट्टिदंथ ज्ञानक्के ' आकारसमर्पकतया ' अंदरे आत्माकारतया व्यावर्तकत्वमंगीक्रियतएव एंदरे भेद ( प्रकार ) नन्निंद ओडंबट्टदे, आदकारण आत्मकर्मकत्व अभाव इद्दरू वेदांतवाक्यजनित विज्ञानवु आत्माकारवागुत्तदे, हीगागुवदरिंद आत्मज्ञानत्वेनाभिमतस्य तज्ज्ञान-त्वाभावप्रसंगो वा । अज्ञाननिवृत्त्यभावप्रसंगो वा । अज्ञानस्यैवाभाव-प्रसंगो वा ई प्रकार दोष अतिप्रसंगवू बरुवदिल्ल.

मूलवाक्यगळु–नचात्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वं । तदज्ञाननि-वृत्तिश्च तेन नभवति ई एरडू अतिप्रसंगगळु बरुवदिल्लवेंब भाव.

टीका–द्रष्टव्य इत्यादिश्रुतयश्च तत्परत (यैवोप) योपपत्स्यंते ॥

अर्थ–द्रष्टव्यादि श्रुतिगळु तदाकारप्रतिपादनपरत्वदिंद कूडुत्तवे.

टिप्पणि ( वे. ती. )–तत्परतयैवेति । तदाकारत्वप्रतिपादनपरत-यैवेत्यर्थः । यद्यपि तव्यादिप्रत्ययः कर्मण्येव विहितः । तथापि क्रियया‌ऽऽप्तुमिष्टतमत्वेपि क्रियानिष्पादकत्वरूपकर्मत्वस्य मुख्यस्य त्वन्मतेप्यसंभवादर्थांतरस्वीकारे तु तदाकारत्वमेव स्वीकारार्हमित्यर्थः

अर्थ–'द्रष्टव्यः, मंतव्यः, श्रोतव्यः' इत्यादिश्रुतिगळल्लिद्द ' तव्य ' प्रत्ययगळु ( ' आदि ' पददिंद इदे प्रकार कर्मार्थकदल्लि मत्तू प्रत्ययगळु ) कर्मार्थकदल्लि अवे ( ह्यागंदरे ' द्रष्टव्यः ' अंदरे दर्शनविषयीकर्तव्यः ). ' तथापि कर्तुरीप्सिततमं कर्म ' एंब सूत्रक्के कर्तुः क्रियया ईप्सिततमं कारकं कर्मसंज्ञं स्यात् हीगे वृत्तिकाररु अर्थमाडि-रुत्तारे, इंथ क्रियानिष्पादकत्वरूप कर्मत्ववु निम्म मतदल्लि अंदरे सिद्धांत-कारर मतदल्लियादरू संभविसुवदिल्ल, आदकारण निमगादरू कर्मत्व-

शब्दार्थवन्नु मत्तोंदु रीतियिंद हेळलिक्के बेकु; अदरंते नानादरू तदाकारत्व-रूप अर्थांतरवन्नु हेळुत्तेने.

टीका—नचात्मकर्मत्वेन विनात्माकारत्वं विज्ञानस्य कथमिति वाच्यं । यथा खलु शशविषाणशब्दात्तदाकारं विज्ञानमुत्पद्यते । नच शशविषाणस्य कर्मता संभवति । सकलसामर्थ्यविधुरस्य कारकताया एव दुर्लभत्वात् ॥

अर्थ—पूर्वपक्षकारनु अन्नुत्ताने—आत्मकर्मत्वद होर्तागि आत्माकारत्ववु विज्ञानक्के ह्यागे कूडुत्तदे एंत नीवु अंदरे अनकूडदु. ' शशविषाण ' शब्द मात्रदिंद शशविषाणाकार विज्ञानवु उत्पन्नवागुत्तदे. शशविषाणक्के कर्मता कूडुवदिल्ल, याकंदरे सकलसामर्थ्य ( आकांक्षा, योग्यतादिगळिंद ) रहित वादंथादक्के कारकतावे ( प्रथमा, द्वितीया, मुंताद विभक्तिगळु ) कूडुवदिल्ल.

टीका—तदिहापि वेदांतवाक्यसामर्थ्यादनात्मकर्मकमपि विज्ञानमात्माकारमुत्पत्स्यते । को दोष इत्यत आह ॥ " न च तदाकारं " । आत्मनो दृक्कर्मत्वं विनेत्यनुवर्तते । स्यादेवं । यदि तदाकारं ज्ञानमुत्पद्येत, न चात्मने दृक्कर्मत्वं विनात्माकारं ज्ञानमुत्पद्यते कुत इत्यत आह ॥ " अतद्विषयत्वादेव " । यथाऽनात्मविषयत्वाद्वेदांतवाक्यजनितविज्ञानमात्मज्ञानं नभवतीत्युक्तं । तथा ततएव तदात्माकारमपि नभवतीत्येवकारसंबंधः । अनात्मविषयमपि तदात्माकारं कुतो नस्यादित्यत आह ॥ " तद्विषयत्वमेव हि तदाकारत्वं " । हि शब्दो हेतौ । यस्मात्तद्विषयत्वमेव तदाकारत्वं ज्ञानस्य नान्यत् । तस्मादात्म-

विषयत्वाभावादात्माकारमपि तन्नभवति । व्याघाता-
दिति । कुतस्तद्विषयत्वमेव तदाकारत्वमिति चेत् ।
परिशेषात् ॥

टिप्पणि ( वे. ती. )–अनात्मविषयत्वात् । आत्माविषयत्वात् । एवमुत्तरत्रापि । ( ननु तदाकारत्वमेव नतद्विषयत्वं । शशविषाणशब्दजनितज्ञाने तद्विषयत्वाभावेपि तदाकारत्वदर्शनात् । तदाकारत्वं संबंधाभावादित्याशंकते ॥ कुत तद्विषयत्वमिति । असतो निःस्वरूपत्वेन विषयत्वरूपसंबंधवत्त्वाभावेपि असच्छशविषाणमित्यबाधितविशिष्टप्रतीतिबलेन सिद्धे संबंधे विषयत्वरूपसंबंधस्य विद्यमानेज्ञानएव कल्पनाद्वक्ष्यमाणरीत्या तद्विषयत्वातिरिक्तस्य तदाकारत्वस्य दुर्निरूपत्वाच्च तद्विषयत्वमेव तदाकारत्वमित्यभिप्रेत्य परिहरति ॥ परिशेषादिति ) ॥

टिप्पणि (रा. ती.)–तदिहेत्यत्र तदित्यस्य विज्ञानपदेनान्वयः ॥ इहेति । आत्मज्ञानिन्यपीत्यर्थः । विप्रतिपन्नज्ञानाकारत्वविरोधेपीति वार्थः ॥ अनात्मेति । आत्माकर्मकमपीत्यर्थः ॥ स्यादेवमिति । नकोप्यतिप्रसंग इत्युक्तप्रकारः स्यादित्यर्थः । एवकारोक्तिघटनायाह ॥ यथेति ॥ ततएवेति । आत्माविषयत्वादेवेत्यर्थः ॥ येन हेतुनाऽऽत्मज्ञानत्वाभाव आपादितः ॥ ततएव हेतोरित्यर्थः ॥ इत्येवकारसंबंध इति ॥ एवकारेण प्रागुक्तहेतोरेवेति प्रतीतेर्येत्यादिनोक्तप्रकारेण प्राक् प्रकृतहेतुतां स्पष्टीकृत्यानंतरमेवकारसंबंधो बोध्य इत्यर्थः ॥ अन्यथाऽपूर्वहेतुत्वेऽतद्विषयत्वादित्येव ब्रूयादिति भावः ॥

टिप्पणि ( श्री. ती. )–सामर्थ्यादिति । आकांक्षादिमच्छब्दस्य तदाकारज्ञानजनकत्वस्वाभाव्यादित्यर्थः ॥

**अर्थ** (वे. ती.)–अनात्मविषयत्वात् एंदरे जडविषयत्वात् एंत अर्थ-भ्रांतियादीतु एंत तिळिदु **टिप्पणीकाररु** आत्माऽविषयत्वात् एंत व्याख्यानमाडुत्तारे. इदरंते 'अनात्मविषयत्वात्' एंत मुंदे एल्ललि बरुत्तदो अल्लल्लि हीगेये अर्थमाडतक्कद्दु. परनु शंकिसुत्ताने–तदाकारत्ववे तद्विषयत्व अल्ल, याकंदरे 'शशविषाण' शब्दजनित ज्ञानदल्लि तद्विषयत्व (शशविषाणविषयत्व) इल्लदिद्दाग्यादरू तदाकारत्व (शशविषाणाकारत्व) कंडदे. तदाकारत्वज्ञानवादरू यावदू संबंध इल्लदिद्दरुत्तद, ईप्रकारदिंद शंकिसुत्ताने, "**कुतस्तद्विषयत्वमेव तदाकारत्वं**" एंब वाक्यदिंद. ईप्रकार परनु शंकिसलु **सिद्धांतकाररु** परिहारमाडुतारे. ह्यागंदरे–असत्तिगे निःस्वरूपत्व इरुवदरिंद विषयत्वरूप संबंधवत्व इरदिद्दरू '**असच्छशविषाणं**' एंत अबाधित विशिष्टप्रतीतियिरुदिंद (**असच्छशविषाणं** [असत्+शशविषाणं] एंत एरडु शब्दगळिंद कूडिद ज्ञानवे विशिष्टप्रतीति) संबंध सिद्धवागुत्तिरलु विषयत्वरूप संबंधक्के विद्यमानवादंथ ज्ञानदल्लिये कल्पना माडतक्कद्दु. मुंदे हेळुव रीतियिंद (परिशेषप्रमाणदिंद) तद्विषयत्व बिट्टु तदाकारत्व हेळुवदक्के बरुवदेइल्ल. आदकारण, '**तद्विषयत्वमेव तदाकारत्वं**' एंब अभिप्रायवन्नु मनःसिनल्लि इट्टुकोंडु **टीकारायरु** '**परिशेषात्**' एंब वाक्यदिंद परिहारमाडुत्तारे.

**टीकेयअर्थ**–परनु अन्नुत्ताने–'तत्' अंदरे आ विज्ञानवु 'इह' अंदरे आत्मज्ञानियल्लि वेदांतवाक्यसामर्थ्यदिंद आत्मविषयक आगदे इद्दाग्यादरू आत्माकारवागुत्तदे. हीगिरलु याव दोष बरुत्तदे एंत परनु अनलु, **मूलकाररु** हेळुत्तारे–"आत्मनिगे दृक्कर्मत्व हेळदहोर्तु आत्माकारज्ञान हुट्टुवदिल्ल". '**आत्मनो दृक्कर्मत्वं विना**' इष्टु पूर्ववाक्यदिंद अनुकर्षमाडिकोळ्ळबेकु. आत्मनिगे दृक्कर्मत्व हेळदे आत्माकार ज्ञानवु उत्पन्नआगुत्तिद्द पक्षदल्लि याव प्रकारदू अतिप्रसंगरूप दोषवु बरलिक्किल्ल, आदरे आत्मनिगे दृक्कर्मत्व हेळदहोर्तु आत्माकारज्ञानवु उत्पन्नवागुवदिल्ल. याके आगुवदिल्ल एंदरे **मूलकाररु** हेळुत्तारे–"आत्मज्ञानक्के अतद्विषयत्व इरुवदरिंद आत्माकारज्ञानवु उत्पन्नवागुवदिल्ल" अनात्मविषयत्व इरुवदरिंद वेदांतवाक्यजनितविज्ञानवु ह्यागे आत्मज्ञान आगुवदिल्लवंत मेले हेळल्पट्टितो अदरंते विज्ञानक्के आत्मअविषयत्व इरुवदरिंद आत्माकारवादरू आगलारदु. मूल-

दल्लि इद्द 'एव'कारद संबंधवन्नु हीगे ('यथाऽनात्मविषयत्वात्' एंब वाक्यद प्रकार) तिळिदुकोळ्ळबेकु. परन्तु पुनः शंकिसुत्ताने–अनात्मविषय इद्दरू अदु आत्माकारवेके आगबारदु एंदरे पूर्णबोधरु हेळुत्तारे–"याव कारणद्देसेयिंद तद्विषयत्ववे तदाकारत्ववो आ कारणद्देसेयिंद तदाकारत्व अल्ल". मूलदल्लि 'हि' शब्दवु हेत्वर्थदल्लि उंटु. इन्नु मूलार्थवन्नु टीकारायरु बरेयुत्तारे–याव कारणद्देसेयिंद तद्विषयत्ववे तदाकारत्ववु ज्ञानक्के उंटो, अन्यत् अल्लवो, आ कारणद्देसेयिंद विज्ञानक्के आत्मविषयत्व इल्लदेइरुवदरिंद आत्माकारवादरू आगलारदु. आगुत्तदे एंदरे व्याघातदोष बरुत्तदे (तद्विषयत्व आगदेइद्दंथाद्दु तदाकार आद पक्षदल्लि घटज्ञानवु आत्माकारवागालि, ई प्रकार व्याघात). परन्तु पुनः केळुत्ताने–तद्विषयत्ववे तदाकारत्व याके एंदरे परिशेषप्रमाणदिंद सिद्धांतकाररु हेळुत्तारे.

**टीका–तथाहि । तदाकार एवाकारो यस्येति वा, तदाकार इवाकारो यस्येति वा, स आकारो यस्येति वा तदाकारं विज्ञानमित्यभिधातव्यं । प्रकारांतरासंभवात् । तत्र तावत्प्रथम-द्वितीयपक्षावनुपपन्नावित्याह ॥ "नहि ज्ञान-ज्ञेययोरेकाकारता" ॥**

टिप्पणि (वे. ती.)–तदाकारएवेति । यथा एतद्घटाकारं घटांतरमित्यर्थः ॥ तदाकारइवेति । यथा गवाकारो गवय इत्यर्थः ॥ स आकारइति ॥ यथा घटस्त्वाकारो घटइत्यर्थः ॥

टीकेय अर्थ–'तथाहि' अंदरे तद्विषयत्वमेव तदाकारत्वं एंबुवदु परिशेषप्रमाणदिंद हेळुत्तारे–मोदलु, 'तदाकार' एंबुवदक्के पररीत्या मूरु प्रकार विग्रहमाडि ई 'तदाकार' एंबुवदक्के ई प्रकार भिन्न अभिप्राय उंटो हेग एंत केळुत्तारे. मोदलनेदु अवधारणापूर्वक षष्ठी बहुव्रीहि. ह्यागंदरे 'तदाकार एव आकारो यस्य' इदर अर्थ–'यस्य' एंदरे याव ज्ञानक्के 'आकारः' अंदरे आकारवु 'तदाकारएव' अंदरे ब्रह्माकारवे इरुत्तदे. एरडने विग्रह–'तदाकार इव आकारो यस्येति वा' इदु उपमानपूर्वक षष्ठी बहुव्रीहि. इदर अर्थ–'यस्य अंदरे याव ज्ञानक्के 'आकारः' अंदरे आकारवु 'तदाकारइव' अंदरे ब्रह्माकारदंते.

इन्नु मेले मूरने विग्रह ' स आकारो यस्येति वा ' इदु केवल षष्ठी बहुव्रीहि इरुत्तदे. इदर अर्थ—' यस्य ' अंदरे याव ज्ञानक्के ' स आकारः ' ब्रह्माकारः ई मूरु प्रकारगळ होर्तु मत्तोंदु प्रकार निन्न मतदल्लि कूडुवदिल्ल. सर्वज्ञरु मोदलिगे प्रथम-द्वितीय पक्षगळु अनुपपन्नवागुत्तवेंदु हेळुत्तारे— " ज्ञान ज्ञेयगळिगे एकाकारता इल्ल " इदर स्पष्टीकरण मुंदे बरुत्तदे.

टीका—सति हि ज्ञान-ज्ञेययोरेकाकारत्वे तदाकार-एवाकारो यस्येति संभवेत् । नचैतदस्ति अनुपलंभात् । एकैव सत्ता ज्ञान-ज्ञेययोराकारोस्तीति चेन्न । अनुगतसत्ताया अनंगीकारात् । सत्तयैकाकारत्वे च वेदांतवाक्यजनितविज्ञानमात्माकारमेव कुतः । घटाकारमपि तत्स्यात् । नापि परेणात्मनि सत्तानामाकारोंगीक्रियते । निराकारतांगीकारादिति । एवं नहि ज्ञान-ज्ञेययोरेकाकारता सदृशाकारतास्ति । येन तदाकार इवाकारो यस्येत्युपपद्येत ।

टिप्पणि ( वे. ती. )—आद्येपि विषयस्य यावानाकारः ज्ञानस्य तावदाकारत्वं विवक्षितं । यत्किंचित्तदाकारत्वं वा । आद्ये आह ॥ अनुपलंभादिति । द्वितीयं शंकते ॥ एकैवेति । द्वितीयपक्षनिराकरणपरतयापि मूलवाक्यं व्याचष्टे ॥ एवमिति । एवं योज्यमिति संबंधः ॥

टिप्पणि ( रा. ती. )—द्वितीयपक्षनिरासकतयापि तदेव वाक्यं योजयति ॥ एवं नहीत्यादि ॥

टीकेय अर्थ—ज्ञान-ज्ञेयगळिगे ( आत्मज्ञान हागु आत्मा इवुगळिगे ) एकाकारत्व इद्दपक्षदल्लि ' तदाकारएवाकारो यस्य ' एंब विग्रह कूडीतु. ईप्रकार इल्ल. ' अनुपलंभात् ' एंबुवदर अर्थ बरेयुवदर्कित पूर्वदल्लि मोदलने विग्रहक्के विकल्पमाडबेकु. ह्यागंदरे—विषयस्य यावानाकारः

**ज्ञानस्य तावदाकारत्वं.** एरडने विकल्प–**यत्किंचित्तदाकारत्वं वा,** मोदलने विकल्पद बग्गे **टीकारायरु** 'अनुपलंभात्' एंत हेळुत्तारे. ( स्पष्टीकरण–विषयक्के एष्टु आकारत्व इरुत्तदेयो अष्टु आकारत्व ज्ञानक्के इरुवदिल्ल ). द्वितीय विकल्पवेंदरे **यत्किंचित्तदाकारत्वं** एंबुवदक्के **टीकारायरु** बरेयुत्तारे, एनंदरे–ओंदे सत्ता ज्ञान-ज्ञेयगळल्लि एकाकारवागि इरुत्तदे एंदरे अनकूडदु. याकंदरे अनुगतसत्तान्यवु ( **सिद्धांतिगळु** ) अंगीकारमाडुवदिल्ल. सत्तादिंद एकाकारता हेळिदपक्षदल्लि वेदांतवाक्यजनित विज्ञानवु आत्माकारवे ह्यांगे आगुत्तदे? घटाकारवादरू आगबहुदु. ( स्पष्टीकरण–परन मतद प्रकार घटदल्लि हांगु आत्मनल्लि इद्दंथ सत्ता ओंदुप्रकारद्दु इरुत्तदे ) **सिद्धांतकाररु** अनुगतसत्ता भिन्नभिन्नवागि इरुत्तदे एंत अन्नुत्तारे–**नापि परेणात्मनि सत्तानामाकारोंगीक्रियते।** ई वाक्यद अर्थ–परनिंद आत्मनल्लि सत्ता अंदरे आकारवादरू अंगीकार-माडलपट्टिल्ल. (आत्मनल्लि आकारविद्दरे यत्किंचित् तदाकारत्व हेळबहुदु एंब भाव ). आत्मनिगे परनु निराकारता हेळुत्ताने. ईप्रकारवागि ज्ञान ज्ञेयगळिगे एकाकारता हांगु सदृशाकारता इल्ल. मूलदल्लि 'एकाकारता' एंत इष्टे इरुत्तदे. **टीकारायरु** आ वाक्यक्के एकाकारता हांगू सदृशाकारता एरडू इल्लवेंत व्याख्यानमाडिदरु '**येन तदाकार इव आकारो यस्येत्युपपद्येत** एंब वाक्यद अर्थ–'येन' एकाकारता हांगु सदृशाकारता इद्दपक्षदल्लि "**तदाकार इव आकारो यस्य**" एंब विग्रह कूडीतु.

**टीका–अत्यंतसादृश्यस्यानुभवबाधितत्वात् । किंचित्सादृश्यस्य प्रागिवातिप्रसंजकत्वादिति योज्यं । तृतीयेपि पक्षे नतावत्साक्षाज्ज्ञेयं ज्ञानस्याकारः संभवति । आधाराधेयभावाभावात् ॥**

टिप्पणि ( वे. ती. )–अत्यंतसादृश्यस्येति । आत्मज्ञानयोरिति शेषः । यद्यपि निराकारतांगीकारेणैव द्वितीयपक्षोप्यनुपपन्नस्तथाप्यभ्युच्चयेन दूषणांतरोक्तिरिति ध्येयं । स आकार इवेति विषय-

स्याकारसादृश्यमुक्तं । तन्नात्यंतसादृश्यं । आधाराधेयभावाभावात् ।

टिप्पणि ( रा. ती. )—किंचित्सादृश्येति । सत्त्वादिना सादृश्यस्य वेदांतजन्यं ज्ञानं घटाकारमपि स्यादिति प्रागुक्तदिशातिप्रसंजकत्वादित्यर्थः ॥ आधाराधेयेति । आकारस्याकार्येवाधारः । आत्मन एवाकारत्वे ज्ञानस्याधारतात्मनश्चाधेयता स्यात् । नचायमाधाराधेयभावो युक्तः । आत्मनोपरिच्छिन्नतयानाधेयत्वाज्ज्ञानस्य परिच्छिन्नतया तदनाधारत्वाच्चेति भावः ॥

टिप्पणि ( श्री. ती. )—अनुभवेति । आंतरत्व-बाह्यत्वरूपवैलक्षण्यस्यैवानुभवसिद्धत्वादिति भावः ॥ प्रागिवेति । सत्तयैकाकारत्वेत्युक्तरीत्येत्यर्थः ॥

टीकेय अर्थ—आत्मनिगे हांगु ज्ञानक्के अत्यंत सादृश्य हेळिदरे अनुभवविरोध बरुत्तदे. स्पष्टीकरण—आंतरत्व बाह्यत्वरूप वैलक्षण्यक्के अनुभव सिद्धत्व उंटु. आत्मनिगे निराकारता हेळुवदरिंद ( ' तदाकार इवाकारो यस्य ' एंब ) द्वितीयपक्ष निराकरणवायितु. हीगिल्लु अत्यंतसादृश्यवन्नु पुनः निराकरण याके माडुत्तारे एंदरे अभ्युच्चयदिंद ( समुदायत्वेन ) दूषणांतरोक्ति एंत तिळियतक्कद्दु. किंचित्सादृश्य हेळिद पक्षदल्लि मोदलनंते अतिप्रसंग बरुत्तदे एंत योजनामाडतक्कद्दु. स्पष्टीकरण—सत्तादिंद एकाकारत्व हेळिदरे वेदांतवाक्यजनित विज्ञानक्के आत्माकारवे याके, घटाकार याके हेळबारदु ? एंबुवंथ अतिप्रसंग. तृतीय पक्षदल्लादरू ज्ञेयवन्नु कुरितु ज्ञानक्के साक्षादाकार संभविसुवदिल्ल. याकंदरे आधार-आधेयभावविल्ल. आकारक्के आकारियल्लिये आधार हेळतक्कद्दु. आत्मनिगे आकारवे इल्ल, अंदबळिक आधार-आधेयभाव ह्यागे कूडीतु. विशेष स्पष्टीकरणवन्नु मेलिन टिप्पणियल्लि नोडु.

टीका—अतःप्रकारांतरासंभवे परिशेषाद्विषयतया व्यावर्तकत्वेन स आकार इव यस्य तत्तदाकारमिति वक्तव्यं । तथाच तद्विषयत्वमेव तदाकारत्वं संपद्यते ।

**ततश्च वेदांतवाक्यजनितं विज्ञानमात्मविषयं नचे-त्तदा तदाकारमपि नभवेदिति युक्तमेवेति ॥**

**टिप्पणि** ( वे. ती. )–स आकार इवेति विषयस्याकारसादृश्य-मुक्तं । तन्नात्यंतसादृश्यं । आधाराधेयभावाभावात् । नापि यत्किं-चित्सादृश्यं । वेदांतजन्यज्ञानस्य घटज्ञानत्वापत्तेरित्यत उक्तं । व्यावर्त्तकत्वेनेति । आधाराधेयभावाभावाद्व्यावर्त्तकत्वमपि कथमि-त्यत उक्तं । विषयतयेति ॥

**अर्थ** ( वे. ती. )–"स आकारइव" ईप्रकार विषयक्के आकारसादृश्य हेळल्पट्टितु. आ सादृश्य अत्यंत सादृश्यवेंत तिळियतक्कद्दल्ल. याकंदरे आधार-आधेयभावविल्ल. ( स्पष्टीकरण–आत्मा विषय; ज्ञान विषयी. ईप्रकार विषय-विषयीगळिगे भेद इरुवदरिंद अत्यंत सादृश्य कूडुवदिल्ल; ह्यागंदरे घटवु विषयविरुत्तदे, रूपवु विषयी इरुत्तदे; इवेरडू ओंदे आद-बळिक घट आधारमाडिकोंडु आधेयी आदंथ रूपवु इरुत्तदे एंत हेळलिक्के ह्यागे बंदीतु ). यत्किंचित्सादृश्यवादरू हेळलिक्के बरुवदिल्ल, याकंदरे वेदांतजन्यज्ञानक्के घटज्ञानत्व बरुत्तदे; आदकारण 'व्यावर्तकत्वेन' एंत **टीकारायरु** अंदरु. 'व्यावर्तकत्वेन' अंदरे 'भेदेन' एंतर्थ. आधार-आधेयभाववे इल्लदादबळिक व्यावर्तकत्ववादरू ह्यागे कूडुत्तदे एंत परनु शंकिसिदरे विषयतया कूडुत्तदे एंत **टीकारायरु** हेळुत्तारे. तात्पर्य विषय-विषयीभावदिंद कूडुत्तदे एंतर्थ.

**टीकेय अर्थ**–आदकारण एरडने प्रकारदिंद विग्रह कूडदेइरुत्तिरलु परि-शेषप्रमाणदिंद उक्तवाद विग्रहगळ देसेयिंद विषयत्वेन ( मेलिन मूरु समासगळल्लि विषयत्व एंब माते बरलिल्लवादकारण ) भेद उंटायितु. कारण '**स आकार इव यस्य तत्तदाकारं**' ईप्रकार हेळतक्कद्दायितु. ई समा-सद अर्थ–'स आकारः' अंदरे ब्रह्मन आकारदंते '**यस्य आकारः**' अंदरे याव ज्ञानद आकारवु 'सः आकारो यस्य' 'सः' अंदरे 'आ ब्रह्मने याव ज्ञानद आकार' एंत परनु माडिद्दनु, नावु 'आ ब्रह्मन आकारदंते याव ज्ञानद आकार' ईप्रकार अर्थमाडिरुत्तेवे. सारांश–तद्वि-षयत्ववे तदाकारत्व एंब मातु सिद्धवायितु. स्पष्टीकरण–मूलदल्लि तद्वि-

षयत्वमेव हि तदाकारत्वं एंत इरुत्तदे. ई मूलवाक्यदमेले मूरु प्रकार विग्रहगळन्नु टीकारायरु पूर्वपक्षरीत्या विकल्पदिंद ग्रहिसि, कट्टकडेगे उळिदद्दु विग्रह सर्वज्ञरु तोरिसिद प्रकार 'तद्विषयत्वमेव तदाकारत्वं' एंत सिद्धमाडिदरु. मत्तु 'तदाकारत्व' शब्द 'तद्रूपत्व' वेंत माडदे 'तद्विषयत्व' एंत माडिदरु. आदकारण वेदांतवाक्यजनित विज्ञानवु आत्मविषयक आगदे होदरे आत्माकारवादरू आगलारदु एंत नावु हेळिद मातु युक्तवे सरि.

**टीका—यदि तर्हि तद्विषयत्वमेव तदाकारत्वमत- द्विषयत्वात्तदाकारं नेति व्याप्य-व्यापकयोरभेदापत्ति- रित्येतदप्यनेन निरस्तं ॥**

टिप्पणि (वे. ती.)—यदितर्हीति । तदाकारत्वमित्यतःपरं त- र्हीत्यस्य संबंधः ॥ अभेदापत्तिरिति । प्रतियोगिभेदाभावेऽभाव- भेदस्याप्यभावादिति भावः ॥ अनेनेति । नहीति मूलवाक्येनेत्यर्थः । नहि ज्ञान-ज्ञेययोरेकाकारत्वमिति वदतैकाकारत्वं सदृशाकारत्वं च तदाकारत्वशब्दार्थ इति सूचनेन तदाकारत्वस्य सामान्यत्व- सूचनादित्यर्थः ॥

टिप्पणि (रा. ती)—अनेन निरस्तमिति । विषयतया व्या- वर्तकत्वेन आकारइवेति कथनेनेत्यर्थः ॥

अर्थ (वे. ती.)—'तद्विषयत्वमेव तदाकारत्वं' एंब टीकावाक्यद मुंदे 'तर्हि' इष्टु हच्चबेकु. 'अभेदापत्तिः' एंबुवदक्के टिप्पणेकाररु बरे- युत्तारे—प्रतियोगिगळ परस्पर भेद इल्लदेइद्दरे अवुगळ अभावभेदक्कादरू अभा- ववे बंदितु. इल्लि विशेष स्पष्टीकरण माडद होतु टिप्पणि हांगु टीकावा- क्यद अर्थ चन्नागि तिळियलिक्किल्ल, कारण यथामति स्पष्टीकरण माडुत्तेने. घटवु पटवल्ल, पटवु घटवल्ल, आदकारण घट-पटगळु ओंदक्कोंदु प्रति- योगिगळागुवु. ई प्रतियोगिरूपवादंथ घट पटगळिगे भेदविरदइद्दरे घटा- भाव मत्तु पटाभाव इवेरडुगळादरू ओंदे एन्तेंन्दहागायितु. प्रकृतक्के एनु संगति एंदरे 'तद्विषयत्ववे तदाकारत्व एंत आनंदतीर्थरु अंदरु. अदक्के

पूर्वपक्षकारनु अन्नुत्ताने—अतद्विषयत्ववु तदाकार आगबेड, हीगे निषेध-प्रतियोगिगळु ओंदेआगलि, हांगु इवु ओंदे आदल्लि व्याप्य-व्यापक-गळिगे अभेद प्राप्तवायितु. तात्पर्य साध्यावैशिष्ट्य बंदितु. ह्यागंदरे ब्रह्म **तदाकारं न अतद्विषयत्वात्** हीगे अनुमान माडिदरे साध्य मत्तु हेतु ओंदे आदवु, ईप्रकार परनु दूषण कोट्टनु.

'अनेन' एंब टीकावाक्यक्के टिप्पणिय अर्थ '**नहि ज्ञान-ज्ञेययोरेका-कारता**' एंब मूलवाक्यदिंद. स्पष्टीकरण—ई मूलवाक्यदिंद मेलिन दूषण निराकरणवायितु. ह्यागंदरे, परमात्मनु ज्ञेयनिद्दाने, वेदांतजनित-विज्ञानवु बेरे पदार्थवदे; कारण व्याप्य-व्यापकगळिगे भेदवे बंदितु; अभेद बरलिल्ल. ज्ञान ज्ञेयगळिगे एकाकारत्वविल्लवेन्तेन्नुवदरिंद एका-कारत्व हांगु सदृशाकारत्व इवेरडू 'तदाकारत्व' शब्दार्थदल्लि समावेश-वादवु एंन सूचना माडिदंतायितु; आदकारण तदाकारत्वक्के सामान्य सूचना माडिदंतायितु.

**टीकेय अर्थ**—तद्विषयत्ववे तदाकारत्व, आदरे अताद्विषयत्व इरुवदरिंद तदाकारवल्लवेन्दन्नुव प्रसंग बरुवदरिंद व्याप्य-व्यापकभावगळिगे अभेद प्राप्तवायितु, एतेंदपक्षदल्लि, ई मातु '**नहि ज्ञान ज्ञेययोरेकाकारता**' एंब मूलवाक्यदिंद निरस्तवयितु.

**टीका—नहि तदाकारत्वं तद्विषयत्वमिति पर्याया-वेतौ । किंनाम सामान्य-विशेषवचनौ ॥**

इदक्के वेदेशतीर्थर टिप्पणियु बहळ इद्दु कठिणविरुवदरिंद अवर प्रत्प्र-त्येक वाक्यगळन्नु हिडिदु यथामति अर्थवन्नु बरेयुत्तेने.

**टिप्पणि** ( वे ती. )-किंनाम सामान्य-विशेषवचनाविति । **वृक्ष-त्व**-शिंशुपात्वे इव तदाकारत्वं सामान्यं । तद्विषयत्वं **विशेषः** ॥

**अर्थ**–'सामान्य-विशेषवचनौ' एंत टीकेयल्लि बंददे, अदर स्पष्टी-करणवन्नु **टिप्पणिकाररु** माडुत्तारे—वृक्षत्व-शिंशुपात्वगळंते तदाकारत्व एंबुवदु सामान्य ( वृक्षदल्लि वृक्षत्व अदे, शिंशुपा [मुत्तलगिड] दल्लियादरू वृक्षत्व अदे; आदकारण 'वृक्षत्व' एंबुवदु सामान्य ); 'तद्विषयत्व' एंबुवदु विशेष.

विशेष स्पष्टीकरण—अयं वृक्षः शिंशुपात्वात् एंब उदाहरणदल्लि हेतु मत्तु हेतुमत् अंदरे साध्य इवेरडू ओंदे इद्दंते तोरुत्तवे; परंतु वृक्षत्ववु सामान्य, शिंशुपात्व विशेष, एंत विवेक माडिकोंडरे भेदवु कंडु बरुत्तदे. इदरंते तदाकारत्ववु सामान्य, तद्विषयत्ववु विशेषवेंत तिळियबेकु.

टिप्पणि ( वे. ती. )—तदाकारत्वस्य तद्विषयत्वपरित्यागेनोक्त प्रकारेण निर्विषये घटादावपि सत्त्वादित्यर्थः ॥

अर्थ—तदाकारत्वक्के 'तद्विषयत्व' एंब अर्थवन्नु परित्यागमाडिदरे उक्तप्रकारदिंद अंदरे 'सत्तयैकाकारत्वे च वेदांतवाक्यजनितविज्ञान-मात्माकारमेव कुतः, घटाकारमपि तत्स्यात्' एंत टीकेयल्लि मोद-लिगे हेळिदप्रकार निर्विषयीभूतवादंथ घटादियल्लिसह सत्तानिमित्तदिंद तदा-कारत्व बरलि एंतर्थ.

टिप्पणि ( वे. ती. )—नन्वेवं नच तदाकारमतद्विषयत्वादेवेति कथं विशेषाभावेन सामान्याभावसाधनं । व्यभिचारात् । नहि शिंशुपात्वाभावेन वृक्षत्वाभावसाधनं युक्तमिति चेन्न । यावद्विशेषा-भावेन सामान्याभावसाधनात् ॥

अर्थ—अतद्विषयत्वादेव नच तदाकारं ( 'न तदाकारत्व' एंबुवदु सामान्य, 'अतद्विषयत्व' एंबुवदु विशेष ई मातु लक्षदल्लि मात्र इडु ) हीगे अंदरे विशेषाभावदिंद सामान्याभाव साधनमाडुवदु ह्यागे कूडुत्तदे? माडिदरे व्यभिचार बरुत्तदे ( व्यभिचार हेगे एंबुवदु बरेयुवदिल्ल. विद्यार्थि-गळु तम्म बुद्धियन्नु स्वल्पु व्यय माडलि ) शिंशुपात्वाभावदिंद वृक्षत्वाभाव साधनमाडुवदु युक्तवल्लवेंत अनबेड. याकंदरे विशेषगळु एष्टेंत इरुत्तवो अवेल्लवुगळ अभावदिंद सामान्याभाव साधनमाडलिक्के बरुत्तदे.

टिप्पणि ( वे. ती. )—अतएवोक्तं प्राक् । ततश्च वेदांतवाक्य-जनितं विज्ञानमात्मविषयं नचेत्तदाकारमपि नभवेदिति ॥

अर्थ—आदकारण पूर्वदल्लि हेळित्तु, एनंदरे—वेदांतवाक्यदिंद हुट्टिदंथ विज्ञानवु आत्मविषयक आगदेहोदरे तदाकारवादरू आगलारदु.

टिप्पणि ( वे. ती. )—अतएव चातद्विषयत्वादेवेति हेतुमुक्त्वा तद्विषयत्वमेव हि तदाकारत्वमित्युपपाद्य कथं तद्विषयत्वमेव तदा-

कारत्वं । तदाकारत्वस्य तद्विषयत्वपरित्यागेनापि तदाकारएवा-कारो यस्येत्यादिव्युत्पत्त्या निर्विषये घटादावपि सत्त्वादित्याशंका परिहारपरं । 'नहि ज्ञान-ज्ञेययोरेकाकारतेति' मूलं प्रसक्तप्रतिषेध-परतया प्रवृत्तमिति स्वरसं । तदेतदुक्तमनेन निरस्तमिति ॥

अर्थ–आदकारणवे मूलकाररु 'अतद्विषयत्वादेवेति' एंत हेतुवन्नु हेळि, अनंतर 'तद्विषयत्वमेव हि तदाकारत्वं' एंत उपपादना माडिदरु ( वाक्यवु दोड्डदिद्दरिंद सण्णसण्ण वाक्यगळन्नु माडिरुत्तेने, इदु कन्नड व्याकरणक्के सरियाद मातु ). अनंतर 'तद्विषयत्वमेव तदाकारत्वं' एंबुवदु हागे उपपन्नवागुत्तदेंत शंका बरुत्तिरलु तदाकारत्वक्के तद्विषयत्व हेळदे, 'तदाकारएव आकारो यस्य' इत्यादि मूरु विध विग्रह तोरिसि, निर्विषयभूतवादंथ घटादियल्लिसह 'सत्तयैकाकारत्वे च वेदांतवाक्य-जनितविज्ञानमात्माकारमेव कुतः, घटाकारमपि तत्स्यात्' एंब मातिनिंद अनुपपत्तियन्नुहेळि, 'नहि ज्ञान-ज्ञेययोरेकाकारतेति' एंब वाक्यदिंद शंका परिहारमाडिदरु. 'नहि ज्ञान ज्ञेययोरेकाकारता' एंब मूल-वाक्यवु 'प्रसक्तप्रतिषेधपरतया' एंदरे ज्ञान ज्ञेयगळिगे एकाकारता प्रसक्त-वागिरुत्तदे, अदन्नु निराकरण माडुवदरगोस्कर हेळिरुत्तदे एंब स्वारस्य तिळियतक्कद्दु. आदकारणवे 'अनेन निरस्तं' एंत टीकारायरु अंदिरुत्तारे.

टिप्पणि–( वे. ती. )–केचित्तु । अनेनेति । वक्ष्यमाणेनेत्यर्थः । किंनामेति । तद्विषयत्वं सामान्यं, तदाकारत्वं विशेष इति विवेक इत्याहुः ॥

अर्थ–केलवजनरु टिप्पणेकाररु 'अनेन' एंबुवदक्के 'वक्ष्यमाणेन' ( मुंदे हेळुव वाक्यदिंद ) एंत हेळुत्तारे. वक्ष्यमाण यावदु एंदरे 'तद्वि-षयत्व' एंबुवदु सामान्य, 'तदाकारत्व' एंबुवदु विशेष.

टीकेय अर्थ–'तदाकारत्व' अंदरे तद्विषयत्व हीगे इवेरडू पर्याय शब्दगळल्ल. हागादरे अवु एनेंदरे सामान्य-विशेष वचनगळिरुत्तवे.

टीका–परिशेषसिद्धं तु पर्यवसानमभिप्रेत्य तद्वि-षयत्वमेव तदाकारत्वमित्युक्तमिति ॥

टिप्पणि ( वे. ती. )—परिशेषसिद्धामिति । तथाच तद्विषयत्वमेव तदाकारत्वमित्यभेदोक्तिरौपचारिकीति भावः ॥

टिप्पणि ( श्री. ती. )—परिशेषेति । तदाकारत्वशब्दार्थस्योक्तरीत्या प्रकारत्रयेणासंभवादित्यर्थः ॥

टीकेय अर्थ—'तदाकारत्व' शब्दार्थक्के उक्तरीतियिंद प्रकार त्रयगळु असंभववाद्दरिंद परिशेषप्रमाणदिंद सिद्धवादंथाद्दु यावदो अदे निर्णीतार्थ एंत तिळिदु श्रीमध्वमुनिगळु 'तद्विषयत्वमेव तदाकारत्वं' एंत अंदरु. तात्पर्यवेनेंदरे 'तद्विषयत्वमेव तदाकारत्वं' एंत अभेदोक्ति तोरुवदु औपचारिकियंत तिळियतक्कद्दु.

टीका—नन्वात्मनो दृक्कर्मत्वाभावे वेदांतवाक्यजनितविज्ञानस्यात्माकारत्वं नोपपद्यत इति प्रातिज्ञायातत्कर्मत्वादेवेति हेत्वाभिधानं तत्कर्मत्वमेव हि तदाकारत्वमित्युपपादनंचोचितं । अतद्विषयत्वादेवेत्यादितु केन संगच्छते । मैवं । शशविषाणशब्दात्तदाकारं ज्ञानमुपजायत इति तावत्साक्षिसिद्धं । नतु तत्सकर्मकं । तथा वेदांतवाक्यजनितं विज्ञानमनात्मकर्मकमप्यात्माकारं किं नस्यादित्येतदाशंकानिवृत्तये ज्ञानंप्रति कर्मत्व-विषयत्वयोर्विशेषाभावसूचनाय कर्मोपक्रमेण विषयव्यवहारस्य सार्थकत्वात् ॥

टिप्पणि ( वे. ती. )—उचितमिति । उपक्रांतशब्देनैव व्यवहारस्य झडित्यर्थोपस्थापकत्वेन प्रतिपत्तिलाघवादिति भावः ॥ अनात्मकर्मकमपीति । आत्मकर्मकत्वरहितमपीत्यर्थः ॥

टिप्पणि ( रा. ती. )—कर्मत्व-विषयत्वयोर्भेदं मत्वा शंकते ॥ नन्वात्मन इति । परोक्तमनुवदति ॥ शशविषाणेति । अविशेषमुपपादयति ॥ तथाहीत्यादिना ॥

टीकेय अर्थ—कर्मत्व बेरे, विषयत्व बेरे. हीगे तिळिदु शंकिसुत्तारे, 'नन्वात्मनः' एंब वाक्यदिंद—आत्मनिगे इक्कर्मत्व इरदइद्दपक्षदल्लि वेदांत-वाक्यदिंद हुट्टिदंथ विज्ञानक्के आत्माकारत्ववू कूडुवदिल्लवत प्रतिज्ञामाडि 'अतत्कर्मत्वादेव' एंत हेतु हेळुवदू हांगु 'तत्कर्मत्वमेव तदाकारत्वं' एंत उपपादन माडुवदू 'उचितं' अंदरे सरियाद मातु इरुत्तदे. याकं-दरे, उपक्रमदल्लि याव तरद शब्दवन्नु प्रयोगमाडिरुत्तदो अदे शब्दवन्नु मुंदे (उपसंहार मुंताद वाक्यगळल्लि) व्यवहरिसिदरे झडित्या अर्थवु मनास्सिनल्लि नट्टु तिळिदुकोळ्ळलिक्के सुलभवागुत्तदे. हीगे माडदे अंदरे अतत्कर्मादेव इत्यादि रीतियिंद शब्द प्रयोगमाडदे 'अतद्विषयत्वादेव' एंत हेतुप्रयोग याके माडिदरु? इदु यातक्के संगतियुळ्ळद्दागुत्तदे एंतंदरे अनकूडदु. याकंदरे 'शशविषाण' शब्ददिंद 'तदाकारं ज्ञानं' अंदरे शशविषाणाकारज्ञानवु उंटागुत्तदेंब मातनक साक्षियिंद सिद्धवादंथाद्दु. 'नतु तत्सकर्मकं' एंदरे आ ज्ञानवु सकर्मकवल्ल (विषयवुळ्ळंथाद्दल्ल. इदु परन मातु, सिद्धांतकाररु तावु अनुवादमाडुत्तारे) अदरंते वेदांत वाक्यदिंद हुट्टिद विज्ञानवु 'अनात्मकर्मकमपि' अंदरे आत्मकर्मकरहित-वागि इद्दाग्यादरु आत्माकारवेके इरबारदु एंब शंका निवृत्तियागुवदरगोस्कर ज्ञानवन्नु कुरितु कर्मत्व-विषयत्वगळिगे भेदाविल्लेंदु सूचिसुवदरसलुवागि 'कर्म' शब्दवन्नु उपक्रमवाक्यदल्लि हाकिदाग्यादरू 'विषय' शब्दवन्नु मुंदे व्यवहरिसिद्दु उचितवदे.

विशेष स्पष्टीकरणवु मुंदिन टीकावाक्यगळमेलिंद तानागिये आगुत्तदे.

टीका—तथाहि शशविषाणशब्दादुपजायमानं ज्ञानं सविषयं निर्विषयं वा। निर्विषयत्वेज्ञानमेव नस्यात्। घटवत्। सविषयत्वे कथमकर्मकं स्यात्। विषयस्यैव कर्मत्वात्। अथ कथं शशविषाणस्य सकलसामर्थ्य-विकलस्य कर्मत्वमिति चेत्। विषयत्वमपि कथं। न विषयत्वं नाम वस्तुसामर्थ्यं किं नाम करणसाम-र्थ्याद्यसदुल्लेखिज्ञानमुपजायते। सविषय इत्युच्यत

**इति चेत् । अथ ज्ञानंप्रति कर्मत्वमपि किमधिकं पश्यसि । जनकत्वमितिचेन्न । ज्ञानंप्रत्यर्थस्य क्वापि जनकतासंमतेः । अपरोक्षज्ञानेपि । कर्मणो न ज्ञानोत्पत्तौ व्यापारः । केवलं करणसन्निकर्षनिष्पत्तावेव तत्सत्तोपयुज्यते । यत्र तु शाब्दादौ ज्ञाने विनापि विषयसत्वेन करणसन्निकर्षोत्पत्तिस्तत्रासतोपि कर्मत्वे किमनुपपन्नं ॥**

इदक्के श्रीश्रीनिवासतीर्थरदू हागु श्रीवेदेशतीर्थरदू टिप्पणिगळु बहळ इद्दु कठिणइरुवकारण अवुगळल्लिय ओंदोंदे वाक्यगळन्नु हिडिदु यथामति अर्थवन्नु बरेयुत्तेने.

उपक्रमदल्लि 'कर्म' शब्दवन्निट्टाग्यू उपसंहारदल्लि 'विषय' शब्दवन्निट्टद्दु वास्तविक (योग्य) विरुत्तदे. याकंदरे अवु सामान्यविशेष वचनगळिरुत्तवेंदु मेले हेळिरुत्तारे, अदन्ने टीकाकारयरु स्पष्टमाडि हेळुत्तारे, 'तथाहि' एंब मोदलाद वाक्यगळिंद—ई वाक्यगळल्लि ओंदु वाक्यदिंद ज्ञानजनकत्ववेंदरेनु एंत सिद्धांतकाररु परनिगे केळल्लु. 'ज्ञानजनकत्वं कर्मत्वं' एंत उत्तरकोट्टनु. इदर मेले विचार नडदिरुत्तदे.

**टिप्पणि (श्री. ती.)—ज्ञानजनकत्वं कर्मत्वमित्युक्ते प्रष्टव्यं ।**

**श्री. ती. टि. अ.** ज्ञानजनकत्ववेंदर कर्मत्ववेंत परनु अनल्लु, अवनिगे केळतक्कद्देनंदरे—

स्पष्टीकरण बालबोधार्थवागि—विषयवु ज्ञानजनकविरुत्तदे. ह्यागंदरे, करणरूप (करण अंदरे इंद्रिय) चक्षुविगे विषयरूप घटद सन्निकर्षवागलु पुरुषनिगे 'अयंघटः' एंत एनु ज्ञानवागुत्तदो अदु घटरूप अर्थदिंद आयितु एंत परन अभिप्राय. इदर मेले कोटिगळु बहळे इरुत्तवे.

**टिप्पणि (श्री. ती.)—ज्ञानत्वावच्छिन्नज्ञानजनकत्वं विवक्षितं । अपरोक्षज्ञानजनकत्वंवा ?**

अर्थ—सकलज्ञानजनकत्ववो अथवा अपरोक्षज्ञानजनकत्ववो ?—

**टिप्पणि ( श्री. ती. )-नाद्यः । अतीतानागतज्ञाने विषयाभावेपि ज्ञानस्य जायमानत्वेन व्यभिचारादर्थस्य ज्ञानंप्रति जनकत्वासम्मतेः ।**

**अर्थ**-मोदलनेदल्ल अतीत-अनागत[1] ज्ञानदल्लि विषय इरदे इद्दाग्यादरू ज्ञानहुट्टुवदरिंद व्यभिचार बंदितु, कारण अर्थक्के ज्ञानवन्नु कुरितु जनकत्व बरलिल्ल.

**टिप्पणि ( श्री. ती. )-यदाकदाचित्सत्वस्य ज्ञानसमयेऽनुपयुक्तत्वात् ।**

**अर्थ**-कदाचित् विषय इद्दरू ज्ञानहुट्टुव समयदल्लि उपयोग बिळदे इरुवदरिंद अर्थवु ज्ञानजनकवागुवदिल्ल.

**टिप्पणि ( श्री. ती. )-न द्वितीयः यद्यप्यपरोक्षज्ञाने विषयस्य नियतपूर्ववर्तित्वमास्ति तथापि नानन्यथासिद्धिः**

**अर्थ**-यद्यपि अपरोक्षज्ञानदल्लि विषयक्के नियतपूर्ववृत्तित्वइद्दाग्यादरू अनन्यथासिद्धियिल्ल.

**स्पष्टीकरण**--घटवन्नु निर्माणमाडलिक्के चक्र-चीवरादिगळु बेकु. रासभ इरदे घटवु हुट्टहुट्टुत्तदे. रासभवु अन्यथासिद्धवेंत करिसिकोळ्ळुत्तदे. चक्रचीवरादिगळु अनन्यथासिद्धवेंदु करिसिकोळ्ळुत्तवे. तर्कसंग्रह-व्यापारवदसाधारणं कारणं करणम् । अनन्यथासिद्धकार्यनियतपूर्ववृत्तिकारणम् कार्यं प्रागभावप्रतियोगि इदरमेले दीपिका-पूर्ववृत्तिकारणमित्युक्ते 'रासभादावतिव्याप्तिःस्यादतो नियतेति तावन्मात्रे कृतकार्येऽतिव्याप्तिः । अतः पूर्ववृत्तीति ।'

**टिप्पणि ( श्री. ती. )-- इंद्रियरूपकरणसन्निकर्षनिष्पत्तावेव तत्सत्ताया उपयुक्तत्वेनान्यथासिद्धतया ज्ञानजनकत्वाभावात् ।**

**अर्थ**-हागादरे विषयद उपयोगवेल्लि इरुत्तदे एंदरे हेळुत्तारे-इंद्रियरूप करणसंबंध हुट्टिसुवदरल्लि अर्थसत्ताद उपयोगविरुवदरिंद अर्थवु अन्यथा सिद्धियायितु, कारण ज्ञानजनकत्ववु अदक्के बरलिल्ल.

---

1 पूर्वदल्लि काशीयल्लिद्द ओंदुघटवन्नु ओब्बनु नोडिरुत्ताने, अदु ईगे इरुवदिल्ल; आदरू अदर विषयक ज्ञानवुंटागुत्तदे. इदरंते वेदादिद अनागत ज्ञानवुंटागुत्तदे.

**स्पष्टीकरण**—घटक्के चक्षुरिंद्रियसंबंध हुट्टबेकादरे घटवु अवश्य बेकु. संबंधदिंद 'अयं घटः' एंब ज्ञानवु हुट्टितु. तात्पर्य ज्ञानक्के कारणवु संबंधवायितु. घटवु परंपरा उपयोगवुळ्ळद्दिद्दरू ज्ञानहुट्टुव समयदल्लि संबंधवे उपयोगवायितु. अर्थात् घट असिद्धवायितु; ज्ञानक्के कारणवागलिल्ल.

**टिप्पणि (श्री. ती.)**—ननु इंद्रियरूपकरणस्यापि विषयसन्निकर्षजनकत्वेनान्यथासिद्धत्वान्न ज्ञानजनकत्वमितिचेत्।

**अर्थ**——परनु शंकिसुत्ताने—करणसन्निकर्षवागुवदक्के अर्थ बेकु एंत निम्म अभिप्रायवायितु. अदरंते अर्थसन्निकर्षवागलिक्के करण बेडेनु? विषयसन्निकर्षवागलिक्के करणबेकु. अंदमेलिक, अन्यथासिद्धत्व करणक्के बंदितु. आदकारण अदक्कादरू ज्ञानजनकत्व बरलिल्ल.

**स्पष्टीकरण**—मेलिनवाक्यदल्लि हेळिदंतेये इल्लियादरू तिळियतक्कद्दु. अदु ह्यागंदरे—विषयसंबंध हुट्टिसुवदरल्लि मात्र करणक्के साक्षाज्जनकत्व बंदितु 'अयं घटः' एंत ज्ञान आगुवसमयदल्लि सन्निकर्षवे उपयोगविद्दितु, करणवु उपयोगवीळलिल्ल. परंपरा उपयोगवीळलि? अर्थात् करणक्के अन्यथा सिद्धत्वबरुवदरिंद अदक्के ज्ञानजनकत्व बरलिल्ल.

**टिप्पणि (श्री. ती.)**—न। **या क्रिया सा सकरणिकेति नियमेन व्यापारवतश्चकरणत्वेन सन्निकर्षजनकस्यापि चक्षुरादींद्रियस्य ज्ञानजनकत्वावश्यंभावात्।**

**अर्थ**—'न' अंदरे हागे अनबेड. ई वाक्यदिंद करणक्के जनकत्ववुंटेंदु सिद्धांतिगळु साधनमाडुत्तारे 'या क्रिया सा सकरणिका' एंत नियमविरुवदरिंद व्यापारवुळ्ळंथाद्दक्के करणवेंत अन्नतक्कद्दु. आदकारण सन्निकर्षजनकवाद चक्षुरादींद्रियक्के ज्ञानजनकत्व अवश्य हेळलिक्के बेकु.

**स्पष्टीकरण**—ज्ञानजननक्रियेगे करणवु अवश्य बेकु. ह्यागे छेदनरूप क्रियेगे कोडलेयु अवश्य बेको अदरंते. आदकारण '**व्यापारवदसाधारणकारणम् करणम्**' एंत शास्त्रदल्लि हेळल्पट्टदे. इंथ असाधारण कारणरूप करणवु सन्निकर्षरूप संबंध हुट्टिसिदाग्यू ज्ञानजननक्के कारणवागुत्तदे एंत अन्नलिक्के बेकु.

**टिप्पणि ( श्री. वे. ती. )–या क्रिया सा सकर्मिकेति नियमस्य शयनासनादिक्रियायां व्यभिचारेणाभावान्न कर्मणो ज्ञानजनकत्वं ।**

**अर्थ**–या क्रिया सा सकर्मिका एंब न्याय हेळि अर्थक्के ज्ञानजनकत्व उंटेंदु परनु तिरुगि साधिसलु अदन्नु ई वाक्यदिंद खंडन माडुत्तारे ह्यागं-दरे–**या क्रिया सा सकर्मिका** एंब नियमक्के शयनासनादिक्रियागळल्लि व्यभिचारवु बरुवदरिंद कर्मक्के ज्ञानजनकत्वविल्ल. स्पष्टीकरण–शयनासनादि क्रियागळल्लि कर्मविल्ल व्यभिचार बंदितु. कारण, कर्मक्के ज्ञानजनकत्व इल्ल.

**टिप्पणि (श्री. ती.) ननु चक्षुरादेः करणस्यावांतरव्यापारवत्व-रूपकरणत्वसिध्यर्थं कर्मसन्निकर्षरूपव्यापारजननद्वारा ज्ञानरूप क्रियाजनकत्ववत् कर्मणोपि कर्मत्वसिध्यर्थं करणसन्निकर्षरूपव्या-पारजननद्वारा ज्ञानरूपक्रियाजनकत्वं किन्नस्यादितिचेन्न**

**अर्थ**–चक्षुरादिरूपकरणक्के अवांतर व्यापारवत्वरूपकरणत्वसिद्धिया-गुवदरगोस्कर कर्मसन्निकर्षरूपव्यापारजननद्वारदिंद ज्ञानरूपाक्रिया जनकत्वउळ्ळंथाद्दु एंत ह्यागे हेळुत्तीरो अदरंते कर्मक्कादरू कर्मत्वसिद्धि-यागुवदरगोस्कर करणसन्निकर्षरूपव्यापारजननद्वारादिंद ज्ञानरूपाक्रिया जनकत्व याके इरबारदु तात्पर्य करणवु अर्थक्के सन्निकर्षरूपव्यापारवन्नु हुट्टिसि ह्यागे अयं घटः एंबुव ज्ञानवन्नु हुट्टिसलिक्के कारणवागुत्तदो अदरंते कर्मवादरू करणसन्निकर्षरूप अवातरव्यापारवन्नु हुट्टिसि अयंघटः एंत ज्ञानवन्नु याके हुट्टिसबारदु एंत नीनु अंदरे अनगूडदु.

**टिप्पणि ( श्री. ती. )–यत्र अतीतादि विषयके शाब्दानुमि-त्यादिरूपे ज्ञाने विनापि विषयसत्वेनार्थप्रतिपादनादिरूपसन्निकर्षो-त्पत्तिस्तत्रासतोपि कर्मत्वे कानुपपत्तिः**

**अर्थ**–ई वाक्यद अर्थ बरेयुवदर किंत पूर्वदल्लि हलवुमातिन अर्थ तिळिसबेकागुत्तदे अदेनंदरे—पूर्वदल्लि ओब्बनु काशियल्लि ओंदु घटनोडि-रुत्तानॆ ईग्ये इल्ले अदु इरुवदिल्ल आदरू अदन्नु कंबुग्रीवादिमत्वदिंद वर्णिसुत्ताने इदक्के अतीतादिविषयक शाब्दप्रतिपादन एंदु अनतक्कद्दु. इदरंते **पर्वतोवन्हिमान्** एंत पूर्वदल्लि अनुमितियु हुट्टिहोगिरुत्तदे ईगे वन्हि इरुवदिल्ल. पर्वतवादरू इरुवदिल्ल आदरू एरडनेदवरिगे तिळिसि हेळुत्ताने इदक्के अतीतादिविषयक अनुमितिप्रतिपादनवेंत अन्नतक्कद्दु.

इन्नुमेले वाक्यार्थ--अतीतादिविषयकवाद शब्द हागु अनुमिति इत्यादिरूपज्ञानदल्लि विषयविरहविद्दरु अर्थप्रतिपादनवन्नु पुरुषनु माडु- त्ताने अंदमेले अर्थप्रतिपादनादिरूप सान्निकर्षोत्पत्ति आगुत्तदे इंथप्रसंगदल्लि विषयइरदेइद्दरू असतोपिकर्मत्वे अंदरे असात्तिगादरु कर्मत्वहेळिदरे "कानुपपत्तिः" अंदरे एनु अनुपपत्तिबरुत्तदे इदरमेलिंद सन्निकर्षवागलिक्के करणवेकु अर्थदअगत्यबीळुवदिल्ल अंदहागे आयितु. कर्मक्कादरू कर्मत्वसि- द्धियागुवदरगोस्करकरण सान्निकर्षरूपव्यापारजननद्वारदिंद कर्मक्के ज्ञानज- नकत्ववन्नु इदरमेलिनवाक्यदल्लिये परनु हेळिद्दनु आ मातुइदरमेलिंद निष्फलवायितु.

टिप्पणि (श्री. ती.)–तथाच करणत्वमिव कर्मत्वमपि न व्या- पारवत्वं अतीतादिविषयकशाब्दादि ज्ञानकर्मण्यव्याप्तेः

अर्थ--करणक्के ह्यागे व्यापारवत्व उंटो अदरंते कर्मक्के इल्ल याकंदरे अतीतादिविषयकशाब्दादि ज्ञानकर्मदल्लि अव्याप्ति बरुत्तदे.

टिप्पणि (श्री. ती.)–तथाच ज्ञानमात्रे अर्थस्य जनकत्वाभावेन शशविषाणविषयक शाब्दज्ञाने शशविषाणस्य सत्वाभावेपि विषय- त्वांगीकारे नकोपिदोषः

अर्थ--ज्ञानत्वावच्छिन्न ज्ञानदल्लि अर्थक्के जनकत्व इरदे इरुवदरिंद शशविषाणविषयकशाब्दज्ञानदल्लि शशविषाणवु सत्वरूपदिंद इरदेइद्दरू विषयत्वांगीकारमाडिदरे यावदु दोषविल्ल. कर्तृकारकाद्यन्यत्वेसति ज्ञान- जनकत्वं कर्मत्वं एंत परनु लक्षणमाडद्दनु अदन्नु अनुपन्नमाडि तारिसिदरु.

टिप्पणि (श्री. ती.)–ननु शाब्दादिरूपकरणस्थले कथं सन्नि- कर्षापेक्षा तथात्वेच विषयसत्वंविना कथं सन्निकर्षोत्पत्तिरितिचे- दुच्यते ।

अर्थ–शाब्दादिरूपकरणस्थळगळल्लि सन्निकर्ष ह्यागे कूडुत्तदे सन्नि- कर्ष कूडुत्तदेंब पक्षदल्लि विषय इरदहोतु सन्निकर्षोत्पत्ति ह्यागे कूडुत्तदे एंत केळिदरे हेळुत्तारे.

टिप्पणि (श्री. ती.)–नहि सन्निकर्षो विषयसत्वव्याप्तः सामा- न्यादेरतीतादि विषयप्रत्यासत्तित्वस्य परैरंगीकारात् ।

अर्थ–सन्निकर्षवु विषयसत्वदिंद व्याप्तअल्ल. अंदरे विषयइद्दरे सन्निकर्षविरुत्तद हीगेनु नियमविल्ल. ब्राह्मणरल्लि ब्राह्मणत्वजाति घटगळल्लि घटत्वजाति इद्दक्के सामान्यवेंदन्नबेकु प्रत्यासत्तिएंदरे संबंध. **नित्यमेकमनेकानुगतं सामान्यं द्रव्यगुणकर्मवृत्ति** इदु ओंदुलक्षण लक्षदल्लि इड्डवदु इन्नुमेले वाक्यार्थ–सामान्यादिधर्मगळिगे अतीतादि विषयसंबंधवन्नु परनु अंगीकारमाडुत्ताने. उदाहरण–ओब्ब ब्राह्मणनु मृतपट्टिरुत्ताने अंथवन विषयक्के ओब्ब पुरुषनु माताडुत्ताने अथवा अवन चरित्रवन्नु हेळुत्ताने अंदबळिक ब्राह्मणत्वरूप सामान्यधर्मक्के अतीतादि ( आदिपददिंद अनागतविषय ग्रहणमाडबेकु ) विषयसन्निकर्ष ( संबंध ) बायितु

**टिप्पणि (श्री. टी. )–नहि शब्दादिकमसन्निकृष्टकरणं घटशब्दादिना पटादेरपि बोधजननप्रसंगात् ।**

अर्थ–शब्दादिगळु असन्निकृष्टकरणगळल्ल. असन्निकृष्टकरणवेंदरे घटशब्ददिंद पटवेंत बोधवादीतु. स्पष्टीकरण–दृष्टियु पदार्थक्के संबंधआगलिक्के बेकु. शब्दवु किविगे केळसलिक्के बेकु. गंधवन्नु नासिकेयु ग्रहण माडलिक्के बेकु. माडदे होदरे असन्निकृष्टकरणआद्दरिंद घटवेंत शब्दवन्नु उच्चरिसलु पटादिगळ बोध आगुव प्रसंग बंदीतु.

**टिप्पणि ( श्री. टी. )–नच शक्तिव्याप्त्यादिकमेव तत्रातिप्रसंगभंजकमिति वाच्यं तस्यैव सन्निकर्षशब्दार्थत्वादित्यालोचनीयं ।**

अर्थ–शक्तिव्याप्त्यादिगळु अतिप्रसंगभंग माडुत्tave एंत नीवु अंदरे अन्नकूडदु, **अस्मात्पदादयमर्थोबोद्धव्यइतिईश्वरसंकेतःशक्तिः ।** हीगे नियमवुंटु. अंदबळिक घटवेंदरे कंबुग्रीवादिमान् एंत अर्थबोधवागुत्तदे. नीवु मेले हेळिदप्रकार घटवेंदरे पटवेंतबोधवागुवदिल्ल अतिप्रसंगबरुवदिल्ल अतिप्रसंग भंगवागुत्तदे एंत नीनुअंदरे अन्नकूडदु. याकंदरे आशक्तिगेवे सन्निकर्ष शब्दार्थत्वउंटेंदु आलोचिसबेकु एंतअर्थ.

**टिप्पाणि ( श्री. टी. )––तदेतत्सर्वमभिप्रेत्यआह । ज्ञानंप्रत्यर्थस्येत्यादिना ॥**

अर्थ–ई अभिप्रायवन्नु हृदयदल्लि इट्टुकोंडु **श्रीमज्जयतीर्थरु ज्ञानंप्रत्यर्थस्य क्वापि जनकतासंमतेः** एंत अंदरु.

## इन्नुमेले श्रीवेदेशतीर्थर टिप्पणि.

टिप्पणि ( वे. ती. )–नच वर्तमानविषयकजन्यप्रत्यक्षत्वावच्छेदेनाव्यभिचारादनन्यथासिद्धेश्च कर्मणोपि हेतुत्वं अन्यथा कर्मसन्निकर्षनिष्पादकत्वेन करणस्याप्यन्यथासिद्धत्वेनाजनकत्वं स्यादिति वाच्यं वर्तमानविषयकानुमितित्वावच्छेदेनापि कर्मणो हेतुत्वापत्तेः सामान्यरूपतया लघुभूतविद्यमानविषयकज्ञानत्वावच्छेदेनापि जनकतापत्तेश्च तत्र विषयस्य व्याप्त्यादिलक्षणसन्निकर्षनिष्पादकत्वेन अन्यथासिद्धत्वेऽत्रापितथास्तु–

अर्थ–अतीतअनागतज्ञानदल्लि विषय इरुवदिल्ल कारण अर्थक्के जनकत्व बरुवदिल्ल व्यभिचारबरुत्तदे एंत हेळिद्दरु अदन्नु ई वाक्यदिंद परनु निवारण माडुत्ताने वर्तमानकालदल्लि इद्द विषयगळिंद हुट्टिदंथ सकलप्रत्यक्षज्ञानगळिगे अर्थवु जनकवागुत्तदे कारण व्यभिचारदोष होयितु हागु अन्यथासिद्धियादरु होयितु कारण कर्मक्के ज्ञानजनकत्वरूपहेतु बंतु कदाचित् नीवु बरलिल्लवेंतअंदरे कर्मसन्निकर्षनिष्पादकत्वदिंद करणक्कादरू अन्यथासिद्धत्व बंतु आदकारण करणक्कादरू अन्यथा सिद्धत्वबरुवदरिंद अदक्कादरू जनकत्ववु बारदेहोगलिएंत शंकिसिदरे हेळुत्तारे. वर्तमानविषयकजन्यप्रत्यक्षत्वावछिन्नक्के कारण वागुत्तदे अंत इष्टे याके? वर्तमानविषयक अनुमितियन्नु कुरितु कर्मक्के हेतुत्वबरलि अदरंते सामान्यरूपदिंद विद्यमान विषयक ज्ञानवन्नु कुरितु कारणवागलि अंदरे परनु अन्नुत्ताने. अनुमित्यादिगळल्लि विषयक्के व्याप्त्यादिलक्षणसन्निकर्षनिष्पादकत्व इरुवदरिंद अन्यथासिद्धत्व बरुत्तदे अंदरे इल्लियादरू करणसन्निकर्षनिष्पादकत्व इरुवदरिंद अन्यथासिद्धत्व बरुत्तदे.

टीकेय अर्थ–ज्ञानंप्रति कर्मत्वविषयत्वगळिगे भेद विल्लवेंत तावु ( सिद्धांतिगळु ) सूचिसदाग्यादरू परनु शंकिसुत्ताने एनंदरे "वेदांतवाक्यजनितं विज्ञानमनात्मकर्मकमपिआत्माकारं किन्नस्यात्।" एंब शंकानिवृत्तियु ह्यागे आयितु एंदरे तथाहिएंब वाक्यदिंद स्पष्टमाडि हेळुत्तारे, शशविषाणशब्ददिंद हुट्टुव ज्ञानवु सविषयवो निर्विषयवो निर्विषय एंतेंदपक्षदल्लि ज्ञानवे इल्लद हागायितु. घटदंते स्पष्टीकरण–घटवु निर्विषयइद्ददरिंद

अदु ज्ञानरूपवल्ल. यावदु निर्विषयवो अदके ज्ञानत्ववु इल्लेंत तात्पर्य—सविषय एंतेदपक्षदल्लि आ ज्ञानवु अकर्मक ह्यागायितु, यार्कंदरे—विषयत्वक्के कर्मत्ववुंटु. सकलसामर्थ्य विकलवादंथ अंदरे कर्तृ-कर्म-करणमुंताद्-कारक विहीनवादंथ शशाविषाणक्के कर्मत्ववु ह्यागे कूडुत्तदे. एंत परनु केळलु विषयत्त्ववादरू ह्यागे कूडुत्तदे एंत अवनिगे नावु प्रश्नमाडिदिवि इदक्के अवनु उत्तरवन्नु कोडुत्ताने—विषयत्ववेंदरे वस्तुसामर्थ्यवल्ल. करणसामर्थ्यदिंद एनु असदुल्लेखिज्ञानवु उत्पन्नवागुत्तदेयो अदे विषयत्व हीगे अवनु उत्तरकोडलु नावु पुनः अवनिगे केळुत्तेवे. एनंदरे—"अथ ज्ञानंप्रतिकर्मत्वमपि किमधिकं पश्यसि" अर्थ—अथअंदरे विषयत्वद्देसेयिंद (श्री. राघ. अथज्ञानमित्यत्राथेतिनिपातो विषयत्वादित्यर्थे) ज्ञानवन्नुकुरितु कर्मत्वक्कादरू एनु आधिक्यनोडुत्ति? (कर्मत्वक्के हागु विषयत्वक्के एनु भेदविल्लवेंब अभिप्राय) परनु अन्नुत्ताने आधिक्यविल्लव्याके 'कर्तृकारकाद्यन्यत्वे सति ज्ञानजनकत्वं कर्मत्वं' हीगे अवनु उत्तर कोडलु अवनिगे पुनः केळतक्कद्देनंदरे—ज्ञानत्वावच्छिन्न ज्ञानजनकत्वं विवक्षितं अपरोक्षज्ञानजनकत्वं वा अर्थ-एल्ल ज्ञानवन्नु हुट्टिसुत्तदो अथवा अपरोक्ष ज्ञानवन्नु हुट्टिसुत्तदो मोदलने विकल्प कूडुवदिल्लवेंब बग्गे ज्ञानंप्रत्यर्थस्य एंब टीकावाक्यप्रवृत्तवायितु. ई टीकावाक्यदअर्थ—ज्ञानवन्नु कुरितु अर्थक्के यावदादरू ओंदु ज्ञानदल्लि जनकताकंडिल्ल (श्री. वे. कापिकस्मिन्नपिज्ञाने) अपरोक्षज्ञानदल्यादरु कर्मक्के ज्ञानोत्पत्तियल्लि व्यापार इल्ल आदरे कर्मसत्ता यल्लि उपयोगवागुत्तदे एंदरे हेळुत्तारे केवलं एंब वाक्यदिंद केवलवागि इंद्रिय संबंध हुट्टिसुव विषयदल्लि अदर सत्ता उपयोग बीळुत्तदे यल्ले शब्दादि ज्ञानदल्लि विषयइरदे इद्दाग्यू करणसन्निकर्षोत्पत्तियु आगे आगुत्तदे अंथस्थळदल्लि असत्वक्कादरू कर्मत्वहेळिदरे एनु अनुपपन्नवागुत्तदे (ईमातु याके आडिदरु एंदरे "अथकथंशशविषाणस्यसकलसामर्थ्यविकलस्य कर्मत्वं" एंत परनु पूर्वदल्लि केळिद्दनु आ मातिगे उत्तरकोट्टरु)

**टीका—ननु कर्तुरन्यत्वेसति क्रियाजन्यफलाश्रयत्वं कर्मत्वं यथागतिजन्यसंयोगाश्रयत्वंग्रामस्य नच शशविषाणादीनां ज्ञानजन्यफलाश्रयत्वमिति कथं**

कर्मतेति चेन्न तत्रापि ज्ञानेन शाब्दव्यवहारजननात्। साक्षात्तदाश्रितं फलं नास्तीति चेत्। एवं तर्हिज्ञानकर्ममात्रे तदभावेनाव्यापकं कर्मलक्षणं स्यात् ज्ञाततायाश्चान्यत्र निराकृतत्वात् एतेन आत्मनि प्रकाशरूपे ज्ञानजन्यप्रकाशोदयासंभवादात्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वं नस्यादित्याद्यतिप्रसंगो विपर्ययापर्यवसायीत्येतदपि निरस्तं ॥

टिप्पणि (वे. ती.)—ननु संयोगादिना साक्षात्संबंधेन क्रियाजन्यफलशालित्वं विवक्षितं। नचासतासह व्यवहाररूपफलस्य संयोगादिराश्रयताप्रयोजकः संभवतीत्याशयेन शंकते ॥ साक्षात्तदाश्रितमिति ॥ एवंतर्हीति। व्यवहाररूपस्य ज्ञानजन्यफलस्य विषयेण सह संयोगाद्यसंभवेन ज्ञानकर्ममात्रेपि उक्तलक्षणाभावादव्याप्तिःस्यादित्यर्थः ॥ एतेनेति। दृग्जन्यफलाश्रयत्वस्य कर्मलक्षणत्वासंभवेनेत्यर्थः ॥ आत्मनीति। प्रकाशरूपत्वादात्मनस्तत्र ज्ञानजन्यत्वाभिमतज्ञाततापरनामकप्रकाशोदयासंभवादित्यर्थः ॥ आत्मनइति। आत्मनो यदि दृक्कर्मत्वं नस्यात्तदा वेदांतवाक्य जनितविज्ञानस्यात्मज्ञानत्वं नस्यात्। अस्तिच तस्यआत्मज्ञानत्वं। तस्मादस्त्येवात्मनो दृक्कर्मत्वमिति विपर्ययपर्यवसानासंभवेनाभासोयं तर्कइत्यर्थः ॥

काडियवाक्यद तात्पर्यार्थ—परनु अन्नुत्ताने—आत्मगे दृक्कर्मत्व इरुत्तदे एंत विपर्ययदिंद निर्णय माडि हेळतक्कद्दु. अदु निमगे असंभव वायितु अंदरे निम्मकडिंद हेळोणागलिल्ल कारण "आत्मनोयदिदृक्कर्मत्वंनस्यात्" एंब निम्म तर्कवु आभाससमान वायितु. ईप्रकार परनु अन्नुत्तिद्दनु आ मात वादरू निराकृतवायितु.

श्री. रा. तदभावेनेति संयोगादिरूपस्य साक्षात्तदाश्रितफलस्याभावेनेत्यर्थः। ज्ञाततैवतादृशंफल सार्वत्रिकमित्यतआह ॥

**ज्ञाततायाइति नप्रमासाधनं प्रमाणमित्यादिना प्रमाणलक्षणादौ निराकृतत्वादित्यर्थः ॥ एतेनेति ज्ञाततया निरस्तत्वेनेत्यर्थः विषयत्वमेव कर्मत्वमिति कथनेनेत्यर्थः । ज्ञानजन्यप्रकाशेति ज्ञाततारूपप्रकाशोदयासंभवादित्यर्थः ॥ विपर्ययापर्यवसायीति । यद्यात्मनो नदृक्कर्मत्वं तर्हि वेदांतजन्यज्ञानस्यात्मज्ञानत्वं नस्याद्स्तितदतोदृक्कर्मात्मेति विपर्ययपर्यवसानस्य बाधान्न विपर्यये पर्यवसायीत्येतन्निरस्तं ज्ञाततापर्यायस्य प्रकाशस्य निरस्तत्वेन न तदाश्रयत्वं कर्मत्वं किंतु विषयत्वमेव कर्मत्वं तदात्मनोपि संभवतीत्युपपादनेन बाधाभावाद्विपर्ययपर्यवसानं युक्तमितिभावः ।**

**टिप्पणिगळ अर्थवन्नु टीकेयअर्थ बरेयुवकालक्के तरुत्तेने-**

**टीकेयअर्थ**-कर्तृनदेसेयिंद भिन्नवागि क्रियादिंद हुट्टिदंथ फलवन्नु यावदु आश्रय माडिकोंडु इरुत्तदो अदक्के कर्मवेंत अनबेकु, ह्यागेअंदरे गतिरूपाक्रियादिंद हुट्टिदंथ संयोगरूपफलाश्रयत्ववु ग्रामक्के कर्तृनल्लि अतिव्याप्ति बरबारदु एंबुवदरगोस्कर कर्तुरन्यत्वेसतिएंतअंदिद्दारे. स्पष्टीकरण-गमनरूपक्रियादिंद हुट्टिदंथ संयोगरूपफलवु ग्रामक्कू आगुत्तदे, देवदत्तगूआगुत्तदे, आदकारण कर्तुरन्यत्वेसति एंत अंदिद्दारे. शशविषाणादिगळिगे ज्ञानरूपाक्रियाजन्यफलाश्रयत्व विल्ल, कारण अवक्के कर्मता कूडुवदिल्लवेंत अनबेड; याकंदरे अवुगळल्लिसह ज्ञानदिंद शाब्दव्यवहाररूपफल जनन उंटु. स्पष्टीकरण-ज्ञानरूपक्रियादिंद हुट्टिदंथ व्यवहाररूपफलक्के शशविषाणादिरूपाविषयद संबंध वागुत्तदे. ( हिंदिनवाक्यगळ अर्थ मात्र लक्षदल्लि इडतक्कद्दु ) प्रत्यक्षवागि विषय संबंधमाडिकोंडु आश्रयिसिद्दंथ फलविल्ल हीगे परनु शंकिसलु सिद्धांतकाररु हेळुत्तारे. हीगे इद्दरे ज्ञानकर्मगळु एष्टु अवेयो अवेल्लरल्यू संयोगादिरूपक्के साक्षात्तदाश्रितफल ( विषयाश्रितफल ) बरदे इरुवदरिंद कर्मलक्षण नीनु माडिद्दु अव्यापक वादीतु. लक्षणक्के अव्याप्ति बंदीतु एंत तात्पर्य. नावु अव्याप्ति हेळलु परनु अदन्नु परिहार माडिकोळ्ळुत्ताने ह्यागंदरे ज्ञाततारूपतादृशफल ( साक्षात्तदाश्रित फल ) सर्वत्रदल्लि उंटु कारण अव्याप्तिहोयितु एंतेंदरे ज्ञाततावन्नु नावु प्रमाणलक्षणदल्लि निराकरणमाडिद्देवे. एतेन अंदरे दृग्जन्यफलाश्रयत्वक्के कर्मलक्षण असंभववादद्दरिंद अथवा श्रीराघवेंद्रतीर्थर टिप्पणि प्रकार

ज्ञाततावन्नु नावु निरास माडिद्दरिंद आत्मनि प्रकाशरूपे अंदरे स्वप्रकाशरूपनादंथ आत्मनल्लि ज्ञानजन्यप्रकाशोदयासंभवात् अंदरे ज्ञातता-रूपप्रकाश असंभव इद्दद्दरिंद आत्मनो दृक्कर्मत्वं विना अंदरे आत्मगे दृक्कर्मत्व हेळद होर्तु तज्ज्ञानत्वं न स्यात् अंदरे आत्मज्ञान एंबुव मातु कूडलारदु इत्यतिप्रसंगोविपर्ययापर्यवसायी अंदरे ईप्रकार अतिप्रसंग (आत्मज्ञान कूडलारदु एंबुव) नावु हेळिद्दिवि अदु विपर्य-दिंद पर्यवसान (समाप्तिमाडि हेळोण) आगलिल्लवेंत परनु अन्नुव मात वादरू निरस्त वायितु स्पष्टीकरण—विमतं मिथ्या दृश्यत्वात् एंबुव परन मूल अनुमानवु विपर्ययपर्यवसायीने आयितु विपर्ययापर्यवसायी आग-लिल्ल एंब तात्पर्य—विशेष स्पष्टीकरण—ज्ञानजन्यफलाश्रयत्ववु स्वप्रकाशरूप नादंथ आत्मनल्लि बरलिल्ल कारण दृश्यत्व बरलिल्ल दृश्यत्वबारदे इद्ददरिंद वेदांत जनितविज्ञानवु आत्मज्ञानवागलिल्ल शास्त्रक्के वैयर्थ्य बंतु एंत नीनु हेळुव अतिप्रसंगवु नन्न अनुमानवन्नु केडसलिल्लवेंत परनु एनु तन्न मनसिनल्लि समाधान तिळिदुकोंडिद्दनु अदु अवन ज्ञाततावन्ने नावु निरासमाडिद्दरिंद व्यर्थ वायितु ज्ञातता (दृग्जन्यफलाश्रयत्वं) इदर आधार माडिकोंडु शशविषाणादिगळिगे ज्ञानजन्यफलाश्रयत्व इल्ल कारण अवक्के कर्मताकूडुवदिल्ल वेंत अंदिद्दनु आ मातु नावु ज्ञातता-वन्नु निराकरण माडिद्दरिंद होरटु होयितु.

टीका—किंच ज्ञानजन्यफलाश्रयत्वंचेज्ज्ञानकर्मत्वं तदा दृश्यत्वहेतुः प्रतिवादिनो सिद्धःस्यात्। ज्ञाततांगीकारिभिरपि नित्यानुमेयेषु तदनंगीकाराद्भागासिद्धःस्यादिति। अथ मतं माभूद्वेदांतवाक्यजनितं विज्ञानमात्माकारतयात्मज्ञानं। तथाप्यात्मा ज्ञाननिवर्तकतयात्मसंबंधितया तज्ज्ञानं भविष्यति। किमात्मनो दृक्कर्मत्वेन नचात्मनो दृक्कर्मत्वाभावेऽज्ञानस्यात्माज्ञानत्वमपि दुर्घटमित्युक्तामिति वाच्यं। आत्माश्रिताज्ञानमात्माज्ञानमित्यंगीकारात्॥

## वेदेशतीर्थरटिप्पणि—

निवर्तकतयेति—निवर्तकत्वरूप ।बंधेनेत्यर्थः उक्तमिति सतिपुष्कल कारणे तत्कर्मकज्ञानप्रतिबंधकं हि तद्ज्ञानमित्यने ।त्म-कर्मकज्ञानप्रतिबंधकत्वादन्यस्य संबधस्य दुर्निरूपत्वा ित्युक्तमित्यर्थः

## श्रीराघवेंद्र ती. टि

असिद्धइति दृग्जन्यज्ञाततारूपफलाश्रयत्वं दृश्यत्वमितिवाच्यत्वा-ज्ज्ञाततायाः प्रतिवादिनोसंमतेरितिभावः आत्मज्ञानप्रतिबंधकत्वे-नात्माज्ञानत्वाभावेप्यात्माश्रितत्वेनात्माज्ञानत्वंस्यादित्याह आत्मा-श्रितेति

## श्रीनिवासतीर्थरटिप्पणि

सिद्धांतिशंकते ॥ नचात्मनइति । आत्माकारतया आत्मविष-यकत्वेन ॥ पूर्वपक्षिउत्तरमाह ॥ आत्माश्रितमिति । परमात्माश्रित-मित्यर्थः । इवुगळ अर्थवन्नु टीकाअर्थबरेयुवकालक्के बरियुत्तदे—

टीकेय अर्थ—ज्ञानकर्मत्वएंदरे ज्ञानजन्यफलाश्रयत्वं एंत लक्षण माडिदरे दृश्यत्वहेतुवु प्रतिवादिगे ( सिद्धांतिगे ) असिद्धवागुवदु, याकंदरे सिद्धांतिगळु ज्ञानविषयत्वं दृश्यत्वं एंदन्नुत्तारे होर्तु ज्ञानजन्यफलाश्र-यत्वं दृश्यत्वं एंत अन्नुवदिल्ल. ज्ञातताअंगीकारमाडुवदरिंदादरू नित्या-नुमेयपदार्थगळल्लि (धर्माधर्म इत्यादिगळल्लि) ज्ञानजन्यफलाश्रयत्ववु अंगीकारमाडलपडुवदिल्ल. याकंदरे स्वच्छेंतःकरणे ज्ञानिप्रसृमरे नेत्रादि-मार्गोद्गते तत्तब्दाह्यचयात्मना परिणते बिंबीभवंतीचितिः । एका-प्यर्थमनो विशेषकवशाद्वैतं प्रपन्ना हरत्यज्ञानं प्रकटीकरोति विष-यान् ज्ञातं मयेदं त्विति ॥ एंब नियमानुसार आत्मनु प्रकाशरूपदिंद नेत्रद्वारा केदारादिगळल्लि ( होलगळल्लि ) होगि आ या वस्तुविनंते परि-णामहोंदि आ आ वस्तुगळल्लि प्रतिबिंबितनागि पुनः प्रतिफलितनागबे-कादरे वस्तुगळु प्रत्यक्ष इरबेकागुत्तवे. आदकारण नित्यानुमेयवस्तुगळल्लि ज्ञाततांगीकारमाडुवदिल्ल. माडिदपक्षदल्लि हेतुवु भागासिद्धिउळ्ळद्दागुत्तदे. ह्यागंदरे पक्षकोटिप्रविष्टवाद दृश्यमान हागु नित्यानुमेयवस्तुगळोळगे

नित्यानुमेयवस्तुगळल्लि ज्ञातता बरलिल्ल. कारण भागासिद्धि । वेदांतवाक्यजनित विज्ञानवु आत्माकारतया अंदरे आत्मविषयतया आत्मज्ञानआगदे इरवल्लदु आदरू आत्माज्ञान निवर्तकत्वरूपसंबधदिंद **तज्ज्ञानं भविष्यति** अंदरे आत्मज्ञानवु आगुत्तदे स्पष्टीकरण—आत्मविषयक अज्ञान कळेयुवदरिंद आत्मज्ञान एंत करिसिकोळ्ळुत्तदे. आदकारण आत्मगे दृक्कर्मत्व याके हेळलिक्के बेकु आत्मगे दृक्कर्मत्व हेळदिद्द पक्षदल्लि आत्माज्ञानक्के ( परमात्मविषयक आ ज्ञानक्के ) आत्माज्ञानत्व एंत हेळुवदु दुर्घटवदे एंत मोदलिगेवे **सतिपुष्कलकारणे** एंब स्थलदल्लि हेळिद्देवे एंत नीवु अंदरे अन्नकूडदु. आत्माश्रित अज्ञानवु अंदरे परमात्मनल्लि आश्रयमाडिकोंडु इद्दंथ अज्ञानवु आत्मविषयक अज्ञान एंत नानु ओडंबडुत्तेने.

**टीका—नच वक्तव्यं ज्ञातव्येनात्मना ज्ञानं व्यावर्तनीयं । नचाज्ञानं तमाश्रयते किंतु ज्ञातारमेव । वस्तुतो भेदाभावेपि ज्ञातृज्ञेयभावसिद्धये यादृशतादृशस्यापि भेदस्यांगीकृतत्वात् । अतः कथमात्माज्ञानं निवर्तयदपि ज्ञानमात्मज्ञानं स्यादिति । अज्ञानस्यज्ञातव्यपरब्रह्माश्रयत्वोररीकरणादिति तत्राह नह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वास्ति ॥**

**वेदेशतीर्थर टिप्पणि.**

नन्वाश्रयाश्रयि भावसंबंधेनात्मव्यावर्तितमज्ञानमात्माज्ञानमिति वक्तव्यं । नचाज्ञानं परमात्माश्रितं मानाभावात् ॥ प्रत्युताहमज्ञइति ज्ञात्राश्रितत्वेनैव तदनुभवात् तथाचोक्तानुपपत्तिरित्याशंक्याह ॥ **नचवक्तव्यमिति** । ननुज्ञात्राश्रितत्वेप्यज्ञानस्य ज्ञेयाश्रितत्वं सिद्ध्यति । तयोरभेदादित्यतआह ॥ वस्तुतइति ॥ अज्ञानस्य ज्ञातव्यपरब्रह्माश्रयत्वेति । आश्रयत्वविषयत्वभागिनी निर्विशेषाचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापिगोचरइति तदुक्तेरितिभावः ॥

**टिप्पणि श्री. रा. ती.** आत्माश्रिताज्ञाननिवर्तकत्वेन ज्ञानस्यात्मज्ञानत्वमयुक्तमित्याशंकते ॥ नचवक्तव्यमिति व्यावर्तनीयमिति । इदमात्माज्ञानं नत्वनात्माज्ञानमिति व्यावृत्तिमत्वेन बोधनीयमित्यर्थः

**टिप्पणि श्री. श्री. ती.** पुनःसिद्धांती शंकते ॥ नचवक्तव्यमिति ज्ञातव्येनेति घटाद्यज्ञानप्रसक्तिवारणाय ज्ञातव्येनात्मनाऽज्ञानंव्यावर्तनीयं ज्ञानविषयो य आत्मा तेन आश्रयाश्रयिभावसंबंधेन व्यावर्तनीयं वेदांतजन्यज्ञानं यद्विषयकं तदाश्रितमज्ञानमिति वक्तव्यमिति यावत् ओमितिचेत् अहमज्ञइति ज्ञातृजीवाश्रयत्वस्यैवानुभवादित्यर्थः । ननु जीवाश्रितत्वेप्यज्ञानस्य परमात्माश्रयत्वं प्राप्तमेव वस्तुतोभेदाभावादित्यतआह ॥ वस्तुतइति ॥ यादृशेति। व्यावहारिकेत्यर्थः । आत्माज्ञाननिवर्तकत्वेनात्मसंबंधितया वेदांतजनितं विज्ञानं तज्ज्ञानं भविष्यतीत्युक्तमाक्षिपति ॥ अतःकथमिति नकेवलं आत्माकार समर्पकं ज्ञानमात्मज्ञानं उक्तरीत्या नभवति किंतु आत्माज्ञानंनिवर्तयदपि ज्ञानं वेदांतजनितं विज्ञानं आत्मज्ञानं कथं स्यात् आत्माश्रितमज्ञानं स्यात्माज्ञानं नचेदं युक्तं अहमज्ञइति अज्ञानस्य जीवाश्रितत्वेनानुभवेन ज्ञेयब्रह्माश्रितत्वाभावादित्यर्थः । इतिनचवक्तव्यमितिसंबंधः । कुतो नवक्तव्यमित्यतो ज्ञेयभूतपरमात्माश्रितत्वमेव मयांगीक्रियतेअतःआत्माश्रिताज्ञाननिवर्तकत्वेनात्मसंबंधितया वेदांतजनितविज्ञानस्यात्मज्ञानत्वं युक्तमित्याह पूर्वपक्षी ॥ अज्ञानस्येति ।

टीकेय अर्थ–पुनःसिद्धांतीशंकिसुत्तानेः––आत्माश्रिताज्ञानं आत्माज्ञानं एंबुवदरिंद आत्माज्ञानदल्लि घटाद्यज्ञानवु आश्रय माडिकोंडंते तोरुत्तदे इदु बरबारदेंदबुवदक्कागि "**ज्ञातव्येनात्मनाज्ञानंव्यावर्तनीयं**" एंबुवटीकावाक्यप्रवृत्तवायितु इदरिंद अदु (घटाद्यज्ञान अथवा अनात्मज्ञान) निवारण वायितु ह्यागंदरे ज्ञातत्वेनात्मनाएंदरे तिळिदुकोळ्ळलिक्के योग्यनादंथ आत्मदिंद, अज्ञानंव्यावर्तनीयं अंदरे ई आत्माज्ञानवु अनात्मज्ञानवल्ल

एंत भेद विशिष्टत्वेन तिळिदुकोळ्ळबेकु आत्मनल्लि अज्ञानविद्दरे आश्रयआ-श्रयिभावसंबंधकूडीतु अज्ञानवे इल्लवेंबुवदक्के टीकावाक्य **"नचाज्ञानं तमाश्रयते किंतु ज्ञातारमेव"** अर्थः—अज्ञानवु आत्मनन्नु अंदरे परमात्मनन्नु आश्रयमाडुवदिल्ल ज्ञातारनन्नु ( जीवनन्नु ) आश्रयमाडुत्तदे. वस्तुतोभेदाभावेपि एंब टीकावाक्यक्के श्रीनिवासतीर्थरटिप्पणियल्लि हेळिद अवताराणिकाः— **ननुजीवाश्रितत्वेप्यज्ञानस्य परमात्माश्रयत्वं प्राप्तमेव वस्तुतो भेदाभावादित्यतआह"** **अर्थ**—अज्ञानक्के जीवाश्रितत्वइद्दाग्यादरू परमात्माश्रयत्व बंदेबंदितु याकंदरे वास्तविकनोडिदरे जीवपरमात्मरल्लि भेद इल्ल. हीगे परनु अनलु सिद्धांतकाररु हेळुत्तारे वस्तुतः अंदरे वास्तविक रीतियिंद भेदाभावेपि अंदरे भेद इरदे इद्दाग्यादरू ज्ञातृज्ञेयभावसिद्धये अंदरे ज्ञातृज्ञेयभावासिद्धियागुवदरगोस्कर यादृशतादृशस्यापिभेदस्य अंदरे व्यावहारिक भेदक्के अंगीकृतत्वात् अंदरे निन्निंद अंगीकृतवागिदे तात्पर्य ज्ञातृज्ञेयभाव यावाग्गे सिद्धवायितु आग्गे अज्ञानक्के जीवाश्रयत्व हेळुव प्रसंगवु बंतु एंबभाव अतःएंब टीकावाक्यक्के श्रीश्रीनिवासतीर्थर अवतरणिकाः—**"आत्माज्ञाननिवर्तकत्वेनात्मसंबंधितया वेदांतजनितं विज्ञानं तज्ज्ञानंभविष्यतीत्युक्तमाक्षिपति"** इदरअर्थ—आत्मविषयक अज्ञाननिवर्तकत्वदिंद ( निवर्तन काळियोण ) आत्मसंबंधदिंद वेदांतजनित-विज्ञानवु आत्मज्ञानवे आगुवदु एंत परनु अंदमातिनमेले सिद्धांतकाररू आक्षेपतेगेदु कोळ्ळुत्तारे तात्पर्य आत्मविषयक अज्ञाननिवर्तकत्वदिंद आत्मज्ञान आगुवदिल्ल एंबभाव इदन्ने मुंदिन वाक्यदल्लि **टीकारायरु** तोरिसुत्तारे इन्नमेले टीकावाक्यदअर्थ—अतःआदकारण कथमात्माज्ञानं निवर्तयदपि ज्ञानं अंदरे ज्ञानवु आत्मविषयकअज्ञान निवर्तनमाडिदाग्यादरू कथं आत्मज्ञानं स्यात् वेदांतजनितज्ञानवु आत्मज्ञानवु ह्यागे आदीतु आगलारदु एंब भाव. परनु अनुत्ताने ह्यागादीतु एंत अन्नबेडारे ( कथं स्यात् एंबुवदक्के नचवाच्यं इदन्नु अन्वयिसबेकु ) याकंदरे अज्ञानस्य अंदरे अज्ञानक्के ज्ञातव्यपरब्रह्माश्रयत्व अंदरे तिळियलिक्के योग्यनादंथ ब्रह्माश्रयत्ववु उररीकरणात् अंदरे नन्निंद आश्रयत्व विषयत्व भागिनीएंब प्रमाणानुसार अंगीकरसल्पट्टदे ईप्रकार परनु अनलु सिद्धांतकाररू "नत्वज्ञानस्य एंब वाक्यदिंद उत्तर कोडुत्तारे.

टीका——हिशब्दो हेत्वर्थे । वाशब्द उपमायां ॥ यथा खलु नघटाज्ञानस्य घटाश्रयत्वं एवमज्ञानत्वान्न ब्रह्माज्ञानस्यापि तदाश्रयत्वमस्ति । अन्यथा घटाज्ञानस्यापि तदाश्रयत्वप्रसंगात् ॥ यत एवं नब्रह्माज्ञानं तदाश्रयं तस्मान्नतन्निवर्तयदपि ज्ञानं ब्रह्मज्ञानमिति ॥

टिप्पणि (श्री. वे. ती.)–अज्ञानस्य घटाश्रितत्वस्य परैरप्यनंगीकृतत्वात्पक्षांतरसूचकवाशब्दास्यानर्थक्यमाशंक्याह । वाशब्दइति ।

टिप्पणि (श्री. ती.)——उक्तहेतोरनुकूलतर्कमाह । अन्यथेति । हिशब्दो हेत्वर्थइत्युक्तं व्यनक्ति । यत एवमिति ॥

टिप्पणि (श्री. श्री.)–यथाखल्वित्यादि । तथाचाज्ञानं नब्रह्माश्रितं अज्ञानत्वात् घटाज्ञानवत् । अप्रयोजकतां परिहरति । अन्यथेति । तदाश्रयं ब्रह्माश्रयं ॥

टीकेय अर्थ–हिशब्दवु हेत्वर्थदल्लि वाशब्दवु उपमादल्लि ह्यागे घटाज्ञानक्के घटाश्रयत्वइल्लो अदरंते ब्रह्माज्ञानक्कादरू ब्रह्माश्रयत्वइल्ल. उदाहरण– अज्ञानं न-ब्रह्माश्रितं अज्ञानत्वात् घटाज्ञानवत् ब्रह्माज्ञानक्के ब्रह्माश्रितत्व हेळिद पक्षदल्लि घटाज्ञानक्कादरू घटाश्रयत्व हेळुव प्रसंगवु बंदीतु. मूलदल्लिद्द हिशब्दक्के हेत्वर्थ हेळिद्दारे अदरन्नु स्पष्टीकरण माडितोरिसुत्तारेः– एतएवं अंदरे यावकारण देशेयिंदब्रह्माज्ञानवु ब्रह्माश्रयअल्लो आकारण ब्रह्माज्ञान निवर्तन माडुवंथ ज्ञानवु ब्रह्मज्ञानवल्ल अज्ञानवे ब्रह्मनल्लि इरदे इद्दबळिक ब्रह्मज्ञानवु यावदन्नु निवर्तन माडबेकु? अर्थात् "तथाप्यात्माज्ञाननिवर्तकतयात्मसंबंधितया तज्ज्ञानंभविष्यति किमात्मनोदृक्कर्मत्वेन" एंत परनु अंद मातु अस्वारस्यवायितु.

टीका–ननु घटाज्ञानमेव नास्ति । ज्ञानोत्पत्तेः प्राक्प्रमाणवैकल्यादेव ज्ञानाभावोपपत्तेः । उत्पन्नेतु ज्ञानेततएव सुतराम् ॥

श्री वे. विशिष्टार्थेति। प्रकृताभिप्रायेणोक्तं । मुख्यार्थेत्यर्थः । अतो गरलमिति दृष्टांतः संगच्छते ॥

( तद्देशकालविशिष्टएतद्देशकालविशिष्टएंत पूर्वदल्लि अर्थमाडिद्दरु अदु अल्ल केवलमुख्यार्थ अथवा वाच्यार्थ एंत इल्ले तिळियतक्कद्दु आदकारण गरल एंब दृष्टांतवु कूडुत्तदे गरल अंदरे विष इदे मुख्यार्थ इरुत्तदे )

टिप्पणिगळ अर्थ टीकाअर्थदल्लि तरुत्तेने—

**टीकेय अर्थ**—परनु शंकिसुत्ताने वाच्यार्थ (मुख्यार्थ) अनुपत्तिरूपलक्षणाबीज आगबेड आप्तवाक्यद मुख्यार्थद तात्पर्य अनुपपत्तियु विषउंणु एंब मातिनंते आगुवदु स्पष्टीकरण—वाच्यार्थद अनुपपत्तिये लक्षणामाडलिक्के कारण ( ज्ञापक ) हीगेनु अल्ल यद्यपि मुख्यार्थ कूडिद्दरू तात्पर्यार्थकूडदे होदरे लक्षणामाडुव प्रसंग बरुत्तदे ह्यागंदरे यावनो ओब्बपुरुषनु वैरिय अन्न उंणलिक्के होटिरुत्ताने अदन्नु नोडि आप्तनु ( यथार्थ वक्ता ) अन्नुत्ताने विषउंणु. ई वाक्यक्के द्विषदन्नभोजनवर्जनविषयदल्लि लक्षणा इरुत्तदे. मत्तु लक्षणा माडुव कारणवु मुख्यार्थ अनुपपत्ति अल्ल याकंदरे विषवु तप्पि मनुष्यनु उंणुत्ताने. अशक्य मातुअल्ल. अग्नियिंद सेचनमाडु एंबुव मातिनल्लि ह्यागे बाधबरुत्तदो अदरंते इदु अल्लवेंब भाव.

इदरंते इत्यादरु पूर्वोक्तरीतियिंद विशेष्टैक्यरूपमुख्यार्थ अनुपपत्ति अभाव इद्दाग्यादरू (मुख्यार्थकूडिदरू एंत अर्थ) आप्तनादंथ उद्दालकन विशिष्टैक्यार्थदल्लि तात्पर्यइल्लदे इद्दमूलकस्वरूपमात्रदल्ल लक्षणामाडल्पडुत्तदे एंब भाव. परनु शंकिसुत्ताने-विशिष्टैक्यरूपवाक्यार्थ विषयदल्लि आप्तन तात्पर्य इल्लवेंब अभिप्रायवन्नु याव आधारदिंद सिद्धमाडुत्तीरि एंत नीवु ( सिद्धांतिगळु ) केळिद्दरे समाधानइष्टे इरुत्तदल्ल. सच अंदरे विशिष्टार्थदल्लि आप्तन विवक्षाभाववु स्वरूपमात्रप्रश्नोत्तरत्वात् अंदरे प्रश्नोत्तरगळु स्वरूपमात्रनडदद्दरिंद सिध्यति अंदरे सिद्धवागुत्तदे. सत्यज्ञानादिवाक्यं तत्त्वमसीत्यादिवाक्यंच स्वरूपमात्रपरं तन्मात्रप्रश्नोत्तरत्वातप्रकृष्टप्रकाशश्चंद्रः सोयं देवदत्तइत्यादिवाक्यदंते ई प्रकार अनुमानवन्नु हृदयदल्लि इट्टुकोंडु एरडू दृष्टांतगळल्लि हेतुवन्नु उपपादन माडुत्तारे आस्मिन् एंब वाक्यदिंद ( इवेल्लवाक्यगळु पूर्वपक्षदृढीकरणवागिरुत्तवे ) आस्मिन् ज्योतिर्मंडले अंदरे ई तेजोमयवाद मंडलदल्लि कश्चंद्रः मत्तु कोयं ई प्रकार प्रश्नगळु चंद्र मत्तु देवदत्तस्व-

रूपमात्र विषयदल्ले केळल्पट्टवु मत्तु वक्ता अंदरे आप्तनु विशिष्टार्थवन्नु हेळुववनु हुणसीगिड यावदु एंत केळलु बेविन गिडवन्नु तोरिसुववन वचनदंते अश्रद्धेयवचनउळ्ळ पुरुषनु आदानु. ई प्रकार पूर्वपक्षबरलु सिद्धांतकाररु अन्नुत्तारे–स्वरूपमात्रविषयदल्लि प्रश्नइद्दद्दादरे नीनु हेळिदंते आदीतु. परंतु हागे इल्ल. स्वरूपमात्रक्के सिद्धत्वइरुवदरिंद सिद्धइद्दंथाद्दन्नु यावनु केळलारनु एंब मातवन्ने श्रीमदाचार्यरु हेळुत्तारे–"देवदत्तादिस्वरूपमात्रक्के सिद्धत्वइरुवदरिंद स्वरूपमात्रदल्ले प्रश्नविल्ल"

टीका—ननु प्राक्प्रकृष्टप्रकाशश्चंद्रइत्येतदुदाहरणं प्रथमं निराकृत्य पश्चात्सोयंदेवदत्तइत्येतन्निराकृतं । अतश्चंद्रादिस्वरूपमात्रस्येति वक्तव्यं । किमर्थं क्रमभंगःउच्यते । परेण स्वग्रंथेप्रकृष्टादिवाक्यविषयएव प्रश्नानुपपत्तिर्व्युत्पादिता । सोयामित्यत्रतुवाच्यार्थानुपपत्तिरेवअतः चंद्रादिस्वरूपमात्रस्येत्युच्यमाने प्रकृष्टादिवाक्यविषयानुपपत्तिपरिहारएवायामिति विज्ञायेत । तदुभयविषयतांतु ज्ञापयितुं क्रमभंगः । एवमपि सोयमित्येतद्विषयतैव ज्ञास्यतइतिचेन्न । प्रकृष्टादिवाक्यविषयत्वस्य परासिद्धत्वेन सुज्ञानत्वात् । परानुक्तं कस्माच्छंकनीयमितिचेन्न । न्यायप्राप्तस्यापि परिहार्यत्वात् । ननुचंद्रदेवदत्तादिस्वरूपं सिद्धमपि संकीर्णतयैव नतु व्यावृत्तत्वादिना । अतस्स्वरूपएव प्रश्नो युज्यते । अतएव प्रकाशइत्येवोक्ते नक्षत्रादौ प्रसंगात् प्रकृष्टइत्येवचाभिहिते संतमसेपि प्रसंगात् नक्षत्रादिव्यावृत्त्या चंद्रस्वलक्षणप्रतिपादनाय प्रकृष्टप्रकाशश्चंद्रइत्याह । एवं स इति वाऽयमितिवावचने भेदभ्रमानिरासात्तन्निरासेन देवदत्तस्वरूपमात्रप्रति-

पादनाय सोयं देवदत्तइत्याहेति गम्यतइति चेन्न। विकल्पानुपपत्तेः। तथाहि।

श्री श्री. प्रथममिति। प्रकृष्टप्रकाशश्चंद्रइति वाक्येनेत्यर्थः॥ पश्चादिति। अनित्येतिवाक्येनेत्यर्थः॥ इतिवक्तव्यमिति। देवदत्तादिस्वरूपमात्रस्येति कथमुक्तमित्यर्थः॥ प्रश्नानुपपत्तिरिति। प्रकृष्टप्रकाशश्चंद्रइति वाक्यस्य प्रकृष्टत्वादिगुणविशिष्टे तात्पर्यांगीकारे कश्चंद्रइति प्रश्नोनुपपन्नः स्यात्। कश्चंद्रइतिचंद्रस्वरूपमात्रजिज्ञासायां ह्येतदुच्यते अतः स्वरूपमात्रएव तात्पर्यमंगीकार्यं प्रकृष्टत्वादिविशिष्टे तात्पर्यांगीकारेच किंलक्षणकइति प्रश्नापत्त्या कश्चंद्रइति चंद्रस्वरूपप्रश्नोनुपपन्नः स्यात् क्रियतेचंद्रस्वरूपप्रश्नस्तेन ज्ञायते प्रकृष्टत्वादिगुणयोगेन तात्पर्यमिति। अन्यथा आम्रान् पृष्टइतिन्यायेन प्रश्नोत्तरयोर्वैयधिकरण्यंस्यादित्येव व्युत्पादितेत्यर्थः॥ वाच्यार्थानुपपत्तिरेवेति। न प्रश्नानुपपत्तिरित्येवकारार्थः। सोयं देवदत्तइति वाक्यस्य योर्थः तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्टंच तद्बोधने तद्देशकालयोरिदानीं सत्वप्रसंगः विशिष्टद्वयैक्यबोधने विशेषणयोरप्यैक्यप्रसंगइत्येवं युत्पादितेत्यर्थः। अनुपपत्तिपरिहारइति प्रकृष्टादिवाक्यस्य प्रकृष्टत्वादौ मुख्यार्थे या तात्पर्यानुपपत्तिस्तस्याः स्वरूपमात्रस्य सिद्धत्वेन तत्प्रश्नत्वानंगीकारादिति परिहारएवायमिति विज्ञायेतेत्यर्थः॥ उभयविषयतामिति। मुख्यार्थे तात्पर्यानुपपत्तिपरिहारस्य प्रकृष्टप्रकाशश्चंद्रः सोयं देवदत्तइति दृष्टांतद्वयविषयतां ज्ञापयितुमित्यर्थः॥ एवमपीति। क्रमभंगेपीत्यर्थः। विषयतैवेत्यत्रानुपपत्तिपरिहारस्येतिवर्तते। देवदत्तादिस्वरूपमात्रस्येत्युक्त्या सोयमितिवाक्यएव मुख्यार्थे तात्पर्यविषयकानुपपत्तिपरिहारएव क्रियतइति ज्ञास्यते नतु प्रकृष्टादिवाक्याविषयकानुपपत्तिपरिहारः क्रियतइति अतउभयविषयता ज्ञापनमनुपपन्नमित्यर्थः॥ प्रकृष्टादिवाक्येति। प्रकृष्टादिवाक्यस्य मुख्यार्थे तात्पर्यानुपपत्त्या स्वरूपमात्र-

विषयतायाः परमते प्रसिद्धत्वेन मुख्यार्थे तात्पर्यानुपपत्तिपरिहारोपि चंद्रस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नइति सुज्ञानइत्यर्थः॥ परानुक्तमिति। सोयमितिवाक्ये वाक्यार्थानुपपत्तेरेव परेणोक्तत्वात्। प्रश्नोत्तरयोर्वैयधिकरण्यान्यथानुपपत्त्या स्वरूपमात्रपरत्वमिति परेणानुक्तत्वात् सोयमितिवाक्यं स्वरूपमात्रप्रश्नोत्तरत्वेन स्वरूपमात्रपरमित्यत्र दृष्टांततया कस्माच्छंकनीयमित्यर्थः। तथाच परानुक्तत्वात्तदाशंकनं देवदत्तादीति वाक्ये तत्परिहारकरणंचायुक्तमितिभावः॥ न्यायप्राप्तस्यापीति। प्रकृष्टादिवाक्ये स्वरूपमात्रपरत्वे योन्यायः स्वरूपमात्रप्रश्नोत्तरत्वरूपस्तेनैव न्यायेन प्राप्तं यत् सोयमिति वाक्यस्य स्वरूपमात्रपरत्वं तस्यापि परिहारःकार्यइत्यभिप्रेत्य परानुक्तमपि वाक्यमाशंक्य परिहृतमित्यर्थः॥ संकीर्णतयेति। नक्षत्रादिसाधारण्येनेत्यर्थः॥ संतमसेपीति। अंधकारेपीत्यर्थः। तस्यापि बहुतरत्वेन प्रकृष्टत्वादितिभावः॥ स्वलक्षणेति। शुद्धं वस्तु स्वलक्षणमिति वचनात् इतरव्यावृत्तशुद्धचंद्रस्वरूपप्रतिपादनायेत्यर्थः॥ देवदत्तेति। असंकीर्णदेवदत्तस्वरूपमात्रेत्यर्थः॥

(टिप्पणिअर्थ टीकाअर्थदल्लि बरुत्तदे.)

**टीकेय अर्थ**—पूर्वदल्लि प्रकृष्टप्रकाशश्चंद्रः एंब उदाहरणवन्नु प्रथमदल्लि प्रकृष्टप्रकाशश्चंद्रइत्यादिषु प्रकृष्टत्वादिविशेषणानि संत्येवेति न सत्सामर्थ्यं एंबं वाक्यदिंद मूलकाररु निराकरणमाडि पश्चात् अनित्यदेशकालसंबंधित्वस्य सत्वात् न सोयं देवदत्तइत्याद्युपमाच एंब वाक्यदिंद सोयं देवदत्तः एंब उदाहरणवन्नु निराकरणमाडिदरु आदकारण चंद्रादिस्वरूपमात्रस्य एंत आचार्यरु अनतक्कद्दित्तु हीगिरलु देवदत्तादिस्वरूपमात्रस्य एंत ह्यागे अंदरु. क्रमभंग याके माडिदरु एंत शंकिसिदरे हेळुत्तारे—परनिंद तन्न स्वग्रंथदल्लि प्रकृष्टादिवाक्यविषयदल्लि प्रश्नकूडुवदिल्लवेंत प्रतिपादनमाडिद्दाने.स्वरूपमात्र विषयदल्लि प्रश्नकूडुत्तदे विशिष्टार्थदल्लि इल्लवेंत अवन हृदय [ स्पष्टीकरण-प्रकृष्टप्रकाशश्चंद्रंएंब वाक्यक्के प्रकृष्टत्वादिगुणवैशिष्टयदल्लि तात्पर्यांगीकारमाडिद पक्षदल्लि कश्चंद्रः एंब प्रश्नवु कूडलारदु. कश्चंद्रएंबुवदु चंद्रस्वरूपमात्रजिज्ञासादल्ले उच्चरिसल्पडुत्तदे. आदकारण स्वरूपमात्रदल्लेवे तात्पर्यवन्नु

अंगीकार माडतक्कद्दु. विशिष्टदल्लि तात्पर्य अंगीकारमाडिद पक्षदल्लि अंदरे विशिष्टार्थदल्ले प्रश्नविरुत्तदे एंतेंदरे किंलक्षणकः एंत प्रश्नहुट्टतित्तु आद्-कारण कश्चंद्रवेंत चंद्रस्वरूपपरप्रश्न अनुपपन्नवागतित्तु परंतु चंद्रस्वरूपपर-प्रश्नवे माडलपट्टदे आदकारण प्रकृष्टत्वादिगुणयोगदिंद तात्पर्यार्थ ( चंद्रस्व-रूपपरअर्थ ) बोधवागुत्तदे. चंद्रस्वरूपपरप्रश्नज्ञायमानआगुवदिल्ल एंतेंदरे आम्रान् पृष्टः एंब न्यायदिंद प्रश्नोत्तरगळिगे वैयधिकरण्य ( प्रश्नवोंदुवि-षयदल्लि उत्तरमत्तोंदुविषयदल्लि ) बरतित्तु ईप्रकारवागि परनु तन्न ग्रंथद्-ल्लि प्रतिपादनमाडिद्दाने. ]

सोयं एंब वाक्यदल्लि वाच्यार्थअनुपपत्ति बरुत्तदे प्रश्नानुपपत्ति एनु अल्ल एंत प्रतिपादनमाडिद्दाने.(स्पष्टीकरण—सोयं देवदत्तः एंब वाक्यक्के याव अर्थवेंदरे तद्देशकालविशिष्टक्के एतद्देशकालवैशिष्ट्यबोधनमाडिदपक्षदल्लि तद्देशकालगळिगे ईगिन कालदल्लि सत्वप्रसंगबरुत्तदे मत्तु विशिष्टद्वयैक्यबो-धनमाडिदपक्षदल्लि विशेषणगळिगे सुद्धा ऐक्यप्रसंग बरुत्तदे. ईप्रकार वाच्या-र्थअनुपपत्ति प्रतिपादन माडिद्दाने ) आदकारण चंद्रादिस्वरूपमात्रस्य एंत मूलदल्लि उच्यमानवाद पक्षदल्लि प्रकृष्टादिवाक्यविषयदल्लि अनुपपत्ति बरुत्तदे एंत मेले हेळिदप्रकार एनु प्रतिपादन माडिद्दाने अदरदु परिहारवे इदु ( नस्वरूपमात्रे प्रश्नः एंबुवंथ ईगिन मूलवाक्यवु ) इरुत्तदे. [ अदरदु परिहार इदु ह्यागे इरुत्तदे एंब बग्गे स्पष्टीकरण—प्रकृष्टादिवाक्यक्के प्रकृष्ट-त्वादिगळ मुख्यार्थविषयदल्लि याव तात्पर्य अनुपपत्तिउंटो आ तात्पर्य अनुपपत्तिगे स्वरूपमात्रसिद्धत्वविरुवदरिंद स्वरूपमात्रप्रश्नत्व अनंगीकार-वागुत्तदे ( सिद्धइद्द मातिगे प्रश्नयारु हाकुवरु? प्रश्नवे हुट्टुवदिल्लवेंत अर्थ ) प्रकृष्टादिवाक्यविषयदल्लि प्रश्न अनुपपत्तिवागुत्तदे.

स्वरूपमात्रदल्लि प्रश्नउपपत्तियागुत्तदे एंत परनु तन्न ग्रंथदल्लि प्रतिपादनमाडिद मातु देवदत्तादिस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः एंब मूलवाक्यदिंद परिहारवायितु ] मुख्यार्थदल्लि तात्पर्य अनुपपत्ति परिहारक्के प्रकृष्टप्रकाशश्चंद्रः सोयं देवदत्तः ई प्रकार उभयदृष्टांतविषयतावन्नु ज्ञापनमाडुवदरगोस्कर क्रमभंगवागिरुत्तदे. एवमपि अंदरे क्रमभंगवादाग्या-दरू •अनुपपत्तिपरहारक्के सोयं एंब वाक्यविषयतावे बंतु ( सोयं एंब वाक्यविषयक अनुपपत्तिपरिहारवायितु प्रकृष्टादिवाक्यविषयक अनुपपत्ति

परिहारवागिल्लवेंब आभिप्रायवु एंत शंकिसिदरे हागे अल्लवेंत अनुत्तारे याकंदरे प्रकृष्टादिवाक्यविषयत्वक्के स्वरूपमात्रविषयता इरुत्तदे एंत परसिद्धत्वइरुवदरिंद सिद्ध इद्दमातिगे प्रश्नत्व कूडुवदिल्ल· एंबुवदु परनिगे चन्नागि गोत्तु उंटु. परनिंद अनुक्तवादंथाद्दु याके शंकिसबेकु एंत अंदरे हागे अनकूडदु एंत अनुत्तारे याकंदरे न्यायदिंद प्राप्तवादंथाद्दक्के परिहार्यत्व उंटु ( स्पष्टीकरण—सोयं एंबुव वाक्यदल्लि वाक्यार्थ अनुपपत्तियन्ने परनु हेळिद्दाने—प्रश्नोत्तरगळिगे वैयधिकरण्य अन्यथा अनुपपत्तियिंद स्वरूपमात्र परत्ववेंत परनिंद उक्तवागिल्ल अंदमेलिक सोयं एंब वाक्यवु स्वरूपमात्रप्रश्नोतरत्वदिंद युक्तवागिरुत्तदे एंदु दृष्टांतया इल्ले याके शंकिसबेकु एंदरे प्रकृष्टादिवाक्यदल्लि स्वरूपमात्रपरत्वविषयदल्लि यावन्यायवु स्वरूपमात्रप्रश्नोत्तरत्वरूप इरुत्तदेयो अदे न्यायदिंद प्राप्तवादंथ सोयं एंब वाक्यद स्वरूपमात्रपरत्वक्कादरू परिहार माडतक्कद्दु एंदु तिळिदु परनिंद अनुक्तवादाग्यादरू अदन्नु शंकिसिकोंडु सर्वज्ञरु परिहारमाडिदरु ) परनु शंकिसुत्ताने—चंद्रदेवदत्तादि स्वरूपवु सिद्धइद्दाग्यादरू साधारण्यदिंद सिद्धहोर्तु इतर ( नक्षत्रादि ) व्यावृत्तत्वदिंद हांगु भेदाभाववत्तया सिद्धइल्ल ( स्पष्टीकरण—चंद्रन स्वरूपवु इतर ( नक्षत्रादि ) व्यावृत्तत्वदिंद सिद्धइल्ल मत्तु देवदत्तन स्वरूपवु भेदाभाववत्तयासिद्ध इल्ल एंत अर्थ ) आदकारण स्वरूपविषयदल्लेवे प्रश्न कूडुत्तदे. अतएव अंदरे व्यावृत्तत्वादियिंद सिद्धार्थत्व इल्लदे एरुवदरिंद प्रकृष्टप्रकाशश्चंद्र इदर बदलु प्रकाशः एंत इष्टे उच्चरिसिद पक्षदल्लि नक्षत्रादिगळल्लि प्रसंग बरुत्तदे ( नक्षत्रादिगळु प्रकाशरूपइरुवदरिंद ) हांगु प्रकृष्ट एंत इष्टे अनलु तमसि अंधकारदल्यादरू प्रसंग बरुत्तदे ( प्रकृष्टत्वरूप धर्मतमसिग्यादरू इरुवदरिंद ) नक्षत्रादिव्यावृत्तआगि चंद्रस्वरूपप्रतिपादनमाडुवदरगोस्कर प्रकृष्टप्रकाशश्चंद्रः एंत अंदिद्दारे इदरंते स अथवा अयं एंब वचनगळल्लि भेदभ्रम निरासआगदे इरुवदरिंद देवदत्तस्वरूपमात्र प्रतिपादन माडुवदरगोस्कर सोयं देवदत्तः एंत अंदिरुत्तारे एंत नीनु प्रतिपादन माडिदरे माडकूडदु याकंदरे विकल्पगळु कूडुवदिल्ल ह्यागंदरे.

**टीका—किंव्यावृत्यादिमत्स्वरूपं प्रश्नप्रतिवचनाविषय इत्यभिप्रायः। उतस्वतंत्रमेव नक्षत्रादिव्यावृत्या-**

दिकं । आद्ये विशिष्टार्थताऽनिस्तारः । अर्थाक्षिप्तमेव व्यावृत्यादि । न शब्दार्थइतिचेन्न । विशेषणार्पणेन विनार्थाक्षेपासिद्धेः । द्वितीयं निराकरोति ॥

मूल--नक्षत्रादिव्यतिरेकमात्रस्यापि सिद्धत्वान्न व्यतिरेकमात्रे ।

टीका--अत्रापि प्रश्नइत्यनुवर्तते । व्यतिरेकइत्युपलक्षणं । भेदाभावोपि ग्राह्यः । मात्रशब्देन व्यतिरेकादेः स्वातंत्र्यं सूचयति । सिद्धत्वाद्घटादाविति शेषः । नहि पृष्टा घटादौ नक्षत्रादिव्यतिरेकं भेदाभावंवा न जानातीति युज्यते । स्वरूपमात्रासिद्धत्वादित्युक्तं । तत्कुत इत्यतआह ॥

मूल—अन्यथा प्रश्नस्यैवासंभवात् ।

टीका—यदापृष्टा चंद्रादिस्वरूपमात्रं न जानीयात्तदा चंद्रइत्ययमितिचानूद्य क इति कथं पृच्छेत् । नह्यविदितं वस्त्वनुवेदितुं शक्यतेतेन ज्ञायते चंद्रादिस्वरूपं तस्य सिद्धमिति । यदि तर्हि प्रश्नपरिहारयोर्न स्वरूपमात्रं विषयः। किं विषयौ तावित्यतआह ॥

मूल—अतः कैर्विशेषणैर्विशिष्टइति प्रश्ने प्रकृष्टप्रकाशतद्देशकालादिविशिष्टएव वाक्यार्थः।

टीका—उपपद्यतइति वाक्यशेषः। तेन प्रश्नइति सप्तम्युपपत्तिः। प्रकृष्टप्रकाशइतिभावप्रधानो निर्देशः । आदिपदं पूर्वोक्तपक्षद्वयसंग्रहार्थं । तदयमर्थः । यत एवं चंद्रादिस्वरूपमात्रे प्रश्नो न युज्यते अतः कश्चंद्रः

कोयमित्यनया वान्नो भंग्या कैर्निर्विशेषणैर्विशिष्टइति विशिष्टविषयएव प्रश्नोंगीकार्यः। प्रश्नेच विशिष्टविषये-सति परिहारवाक्यस्यापि विशिष्टएवार्थो युज्यते। तत्र प्रकृष्टप्रकाशश्चंद्रइत्यादि वाक्यं प्रकृष्टप्रकाशत्वादिवि-शिष्टं चंद्रादिकं प्रतिपादयति। नक्षत्रादिव्यावृत्तिस्त्व-र्थलभ्या। सोयं देवदत्तइत्यादिवाक्यं कदाचित्तद्देश-कालविशिष्टस्यैतद्देशकालवैशिष्ट्यं प्रतिपादयति। एत-द्देशकालवैशिष्ट्यस्य सिद्धत्वेपि तद्देशकालविशिष्टस्ये-ति विशेषणात्। कदाचिदेतद्देशकालविशिष्टस्य तद्दे-शकालवैशिष्ट्यं। ऐक्यं त्वर्थलभ्यं। कदाचिद्विशिष्टद्वयै-क्यंचेति। एवमेव ब्रह्मविदाप्नोतिपरमित्युक्त्या सामा-न्यतोवगतं ब्रह्म कैर्विशेषणैर्विशिष्टमिति विशेषणवि-वित्सया पृष्टे सत्यं ज्ञानमनंतमिति सत्यत्वादि विशि-ष्टमेव बोध्यते। जीवात्माचप्रत्यक्षेण सामान्यतोवग-तोविशेषापेक्षया पृष्टः सिंहो देवदत्तइत्तिवत् तत्वमसी-तिवाक्येन परमात्मसादृश्यविशिष्टः प्रतिपाद्यते अभे-दस्य प्रमाणबाधितत्वात्।

श्री रा. व्यावृत्त्यादिमत्स्वरूपेत्यत्र भेदाभाववत्स्वरूपेपिवा भे-दवत्स्वरूपेवादिपदेन ग्राह्यं। एवमग्रेपि॥ अर्थाक्षिप्तएवेति। तथाच व्यावृत्त्यादेः शब्दार्थत्वाभावान्नाखंडार्थप्रच्युतिः शब्दस्ये-तिभावः॥ विशेषणेति। प्रकृष्टप्रकाशत्वादिविशेषणार्पणेन विना नक्षत्रादिव्यावृत्त्यादेराक्षेपासिद्धेरित्यर्थः॥ व्यतिरेकइतीति। व्यावृ-त्तिरित्यर्थः। सोयमित्युदाहरणाभिप्रायेणाह। भेदाभावोपि ग्राह्य-इति॥ स्वातंत्र्यमिति। चंद्रादिधर्म्यसंस्पृष्टत्वेन भानमित्यर्थः॥

भेदाभावमिति । यत्र क्वचविद्यमानंवा घटादौ स्वप्रतियोगिकभेदाभावंवेत्यर्थः । सिंहावलोकन्यायेन प्रागुक्तस्य विवरणमुत्तरवाक्यमितिभावेनावतारयतिस्वरूपमात्रस्येति ॥ तेनेति । उपपद्यतइति शेषकथनेनेत्यर्थः । अन्यथा यस्यच भावेन भावलक्षणमितिसूत्रे वृत्त्यादौ यस्यच क्रियया क्रियांतरं लक्ष्यते ततः सप्तमीस्यात् । गोषु दुह्यमानासु गत इत्याद्युक्तत्वेन प्रकृतलक्ष्यभूतक्रियाया अदर्शनात्सप्तम्यनुपपत्तिरितिभावः । प्रकृष्टप्रकाशपदस्य बहुव्रीहितया धर्मिवाचित्वे सद्वैशिष्ट्यायोगादाह । भावप्रधानइति ॥ पूर्वोक्तेति । तद्देशतत्कालविशिष्टइत्युक्त्यावर्तमानदेशकालविशिष्टे तद्देशतत्कालवैशिष्ट्यं बोध्यतेइति पक्षस्य प्राप्तत्वात्तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यमिति पक्षस्य विशिष्टद्वयैक्यमिति पक्षस्यच संग्राहायादिपदमित्यर्थः ॥ अतः पदार्थं विवृण्वन् मूलवाक्यं व्याचष्टे । तदयमर्थइति । तस्यायं तदयमिति । अतइति । स्वरूपमात्रे प्रश्नस्यायोगादित्यर्थः ॥ वाचोभंगेति । प्रश्नवाक्यरीत्येत्यर्थः॥ भिन्नपदमेतत् । सोयमिति वाक्यमपि विशिष्टविषयमिति । नन्वेतद्देशकालवैशिष्ट्यं न प्रतिपादनीयं । प्रत्यक्षसिद्धत्वादित्याशंक्य तद्देशकालविशिष्टेन सिद्धमित्याह ॥ एतद्देशकालेति ॥ कदाचिदिति । श्रोतृबुभुत्सानुरोधेनेतिभावः ॥ विशेषणविवित्सयेति । विविदिषयेत्यर्थः । आगमशासनस्यानित्यत्वादिडभावेन निर्देशः । एवं प्रकृष्टप्रकाशादिवाक्यदृष्टांतेनोक्तमखंडार्थत्वं लक्षणवाक्यस्य निरस्येदानींसोयमित्यादिवाक्यदृष्टांतेनोक्तमखंडार्थत्वं तत्त्वमस्यादिवाक्यस्य निराह ॥ जीवात्माचेत्यादिना ॥ प्रत्यक्षेणेति अहमिति । मानसप्रत्यक्षेणवा साक्षिणावा जडात्मत्वज्ञानाद्यात्मत्वाद्यौदासीन्येनवा गतः कोहमितिपृष्टः प्रश्नकर्ता श्वेतकेतुः प्रतिपाद्यते कथं तत्त्वमसितद्वत्ब्रह्मवत् त्वमासि ज्ञानानंदरूपोसीत्येवमित्यर्थः । तदाह सूत्रे । तद्गुणसारत्वात्तु तद्व्यपदेशः । प्राज्ञवदितीतिभावः ॥

प्रमाणेति । द्वासुपर्णेत्यादिप्रमाणेतिवा वक्ष्यमाणभेदप्रमाणेतिवार्थः

श्री वे. व्यावृत्त्यादिमदित्यादिपदेन भेदाभावपरिग्रहः । एवमुत्तरत्रापि ॥ स्वतंत्रमेवेति । चंद्रादिस्वरूपाविशेषणमेवेत्यर्थः ॥ आद्यइति । व्यावृत्तत्वादिविशिष्टस्वरूपबोधनादितिभावः ॥ अर्थाक्षिप्तमेवेति । तथाच शाब्दप्रतीतेर्विशिष्टागोचरत्वेन नशाब्दार्थस्याखंडत्वक्षतिरिति भावः ॥ विशेषणार्पणेनेति । वस्तुतो व्यावर्तकधर्मवैशिष्ट्याबोधने तत्तेदंतयोः सामानाधिकरण्या बोधनेचानुपपत्त्यभावेन व्यावृत्तेर्भेदाभावस्यचाक्षेप्यत्वानुपपत्तेरित्यर्थः । तथाच चंद्रादिस्वरूपे व्यावृत्तिबोधमिच्छता भेदाभावबोधमिच्छताच प्रकृष्टादिलक्षणवाक्येन तत्र व्यावर्तक धर्मवैशिष्ट्यप्रतिपादनं सोयमितिवाक्येन तत्तेदंतयोः सामानाधिकरण्यप्रतिपादनंचावश्यमंगीकार्यमिति सखंडार्थत्वं वज्रलेपायितमेवेतिभावः ॥ तेनेति । उपपद्यतइति शेषानुक्तौ प्रश्नस्य वाक्यार्थाधारविषयत्वयोरभावात्सप्तम्यनुपपन्नास्यात् । तदुक्तौतु प्रश्नेसतीत्यर्थलाभात्सप्तम्युपपत्तिरितिभावः । ननु प्रकृष्टः प्रकाशो यस्येति बहुव्रीह्याश्रयेण न प्रकृष्टप्रकाशशब्देन चंद्रस्य प्रत्यायनान्नतद्विशिष्टो वाक्यार्थइत्यतआह । भावप्रधानइति । तथाच प्रकाशवैशिष्ट्यं वाक्यार्थत्वेन प्राप्तमितिभावः ॥ पूर्वोक्तेति । तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यंवा विशिष्टैक्यंवेति पूर्वोक्तपक्षद्वयेत्यर्थः । ननु यदि प्रश्नोत्तरे विशिष्टविषयके तदा किं विशेषणविशिष्टश्चंद्रादिरितिप्रश्ने प्रकृष्टत्वादिविशेषणविशिष्टश्चंद्रादिरित्युत्तरंस्यात् । नतूक्तरीत्येत्यतआह ॥ तदयमिति । सातिसप्तमीत्वमुपपादयति ॥ प्रश्नइति । प्रकृष्टप्रकाशत्वविशिष्टएववाक्यार्थइतीममंशं व्याख्याति ॥ तत्रेति । प्रकृष्टादिवाक्यसोयमित्यादिवाक्ययोर्मध्यइत्यर्थः । ननु प्रकाशवैशिष्ट्यस्य वाक्यार्थत्वे नक्षात्रादिव्यावृत्तिबोधः कथं स्यादित्यतआह ॥ नक्षत्रेति । तद्देशकालादिविशिष्टएववाक्यार्थइत्यंशं व्याख्याति ॥ सोयमि-

त्यादिना । एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेनाबोध्यत्वादिति प्रागुक्तदोषं परिहरति ॥ एतद्देशकालवैशिष्ट्यस्येति ॥ विशेषणादिति । तद्विशिष्टेच तस्यासिद्धत्वादितिभावः । एवं दृष्टांतयोर्विशिष्टविषयत्वमुपपाद्याद्यादिशब्दमहिम्ना दार्ष्टांतिकद्वयेपि तदुपपादयति ॥ एवमेवेत्यादिना ॥

श्री श्री. अर्थाक्षेपासिद्धेरिति । व्यावृत्त्यादेरर्थादाक्षिप्तत्वस्याप्यसिद्धेरित्यर्थः ॥ ग्राह्यइति । सोयमितिवाक्यबोध्यस्य भेदाभावमात्रस्यासिद्धत्वान्नभेदाभावमात्रे प्रश्नइति ग्राह्यमित्यर्थः । किंविषयौ प्रश्नपरिहारौ वाचोभंग्या वाग्विन्यासविशेषेण ॥ विशेषणादिति । तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यस्यासिद्धत्वेन बोध्यत्वं युक्तमित्यर्थः । ननु पक्षद्वयेप्यैक्यस्य शब्दबोध्यत्वाभावात्कथं तथाबोधनेन भेदभ्रमनिवृत्तिरित्यतआह ॥ ऐक्यंचेति । सत्यज्ञानादिवाक्ये सखंडार्थतामुपपाद्य तत्त्वमसीत्यादिवाक्येपि तामुपपादयति ॥ जीवात्माचेति । प्रत्यक्षेण अहमिति साक्षिप्रत्यक्षेण । सामान्यतः विशेषणाविशिष्टतया ॥ पृष्टइति । कोहमिति श्वेतकेतुनापृष्ट उद्दालकइत्यर्थः । प्रतिपाद्यते गौण्यावृत्येतिभावः । तथाच तत्वमसीत्यस्य तत्सदृशोसीत्यर्थो द्रष्टव्यः । ननु गौण्यावृत्त्या परमात्मसादृश्यविशिष्टतया प्रतिपादनं कस्मादंगीक्रियते । भिन्नप्रवृत्तिनिमित्ततयास्तु तत्त्वं पदयोरेकास्मिन्नर्थे वृत्तिरूपसामानाधिकरण्यस्य असीत्यनेन बोधितत्वान्मुख्यवृत्त्याभेद एवात्र प्रतिपाद्यः किं न स्यादित्यतआह ॥ अभेदस्येति ।

टिप्पणिगळसारांश टीकाअर्थदल्लि बरुत्तदे )

टीकेय अर्थ—सिद्धांतकाररु विकल्पदिंद पूर्वपक्षकारनिगे केळुत्तारे— प्रश्नप्रतिवचनगळ विषयवु व्यावृत्त्यादिमत्स्वरूपवो अथवा नक्षत्रादिव्यावृत्त्यादिरूपस्वतंत्रवो (स्पष्टीकरण—प्रश्नप्रतिवचनगळविषयवु व्यावृत्ति अंदरे नक्षत्रादिगळदेसेयिंद व्यतिरेकधर्मविशिष्टचंद्रन स्वरूपवो अथवा नक्षत्रादिगळदेसेयिंद व्यतिरेकरूपवाद स्वतंत्रविषयवो. व्यावृत्यादि एंब शब्द-

दल्लिद्द आदिपददिंद भेदाभाव परिग्रहण माडबेकु. इदरंते मुंदादरु ग्रहण माडुत्ता होगबेकु ) मोदलने पक्षग्रहणमाडिदरे व्यावृत्तत्वादिविशिष्टस्वरूपवे बोधआगुवदरिंद विशिष्टार्थता निस्तारआगलिल्ल. तात्पर्य प्रकृष्टप्रकाशश्चंद्रः इत्यादिवाक्यगळिगे विशिष्टार्थतावे बंतु एंत अर्थ. पूर्वपक्षकारनु उत्तरकोडुत्ताने—व्यावृत्यादि अर्थाक्षिप्तइरुत्तदे व्यावृत्यादिरूपअर्थवु अर्थात् आगुत्तदे होर्तु शब्दार्थ एनु अल्ल (स्पष्टीकरण—प्रकृष्टप्रकाशश्चंद्रः एंब वाक्यदल्लि नक्षत्रादिव्यावृत्तिरूपअर्थवु शब्दार्थवेनु अल्ल अर्थात् ग्रहणमाडबेकागुत्तदे एंब भाव अर्थात् आक्षिप्तं अर्थाक्षिप्तं विशेषणार्पणेन विना अंदरे प्रकृष्टप्रकाशत्वादिरूपविशेषण कोडदहोर्तु अर्थापेक्षआसिद्धेः अंदरे नक्षत्रादिव्यावृत्यादिगळिगे आपेक्षवे कूडुवदिल्ल. केवलचंद्रवेंत इष्टे अनलु नक्षत्रादिगळन्नु व्यावर्तन माडबेकु एंत बोधवागुवदे इल्लवेंत अर्थ [स्पष्टीकरण श्रीवेदेशतीर्थर टिप्पणिप्रकार—वास्तवीक नोडिदरे व्यावर्तक धर्मवैशिष्ट्यघाति ळियदेइद्दरे हागु तत्ताइदंता इवुगळ सामानाधिकरण्य तिळियदे इद्दरे अनुपपत्यभावदिंद व्यावृत्ति हागु भेदाभावक्के आक्षेप्यत्ववे कूडुवदिल्ल. इदे मातवन्ने टिप्पणिकाररु तथाच एंब वाक्यदिंद स्पष्टमाडुत्तारे ह्यागंदरे चंद्रादिस्वरूपविषयदल्लि व्यावृत्ति हागु भेदाभाव तिळिदुकोळ्ळबेकु एंब पुरुषनिंद प्रकृष्टादिलक्षणवाक्यदिंद व्यावर्तकधर्मवैशिष्ट्यप्रतिपादन माडलिक्के अत्यावश्यइरुत्तदे इदरंते सोयं देवदत्तः एंब वाक्यदिंद तत्ताइदंतागळिगे सामानाधिकरण्य ( तद्देशकालएतद्देशकालसंबंध इदर मुंदे ध्वंस हागु प्रागभावगळु अनुक्रमदंते इद्दु वैयधिकरण्य बिडसबेकु एंब पूर्वदल्लि हेळिद मातु लक्षदल्लि इडबेकु ) प्रतिपादनमाडुवदु अत्यावश्य इरुवदरिंद सखंडार्थवु वज्रलेपसमानवायितु एंब भाव] द्वितीयविकल्पवन्नु श्रीमदाचार्यरु नक्षत्रादि एंब वाक्यदिंद निराकरण माडुत्तारे.

**मूलवाक्यद अर्थ**—"नक्षत्रादि व्यतिरेकमात्रकादरू सिद्धत्वइरुवदरिंद व्यतिरेकमात्रदल्लि प्रश्नवु कूडुवदिल्ल" इदर विशेषस्पष्टीकरण मुंदे टीकावाक्यगळिंद आगुत्तदे. इत्यादरू ( व्यतिरेकमात्रे एंबुवदरल्लि ) प्रश्नएंबुवदु तेगेदुकोळ्ळबेकु. व्यतिरेक ( व्यावृत्ति ) इदु उपलक्षणइरुत्तदे भेदाभाववादरु ग्रहणमाडबेकु. भेदाभाववु ग्रहणमाडबेकुएंत याके अंदरु एंदरे सोयं देवदत्तः एंब उदाहरणदमेले लक्ष्यकोट्टु ईमातु हेळिद्दारे. मात्रशब्ददिंद व्यतिरेक मत्तु भेदाभावगळिगे स्वातंत्र्यवन्नु सूचिसुत्तारे, (स्पष्टीकरण—केवल

व्यतिरेक मत्तु भेदाभावगळल्लि पश्नहुट्टुवदिल्ल एंत अर्थ ) मूलदल्लि सिद्ध-त्वात् एंत इरुत्तदे अदरहिंदे घटादौ एंबशब्द हच्चि शेषपूर्तिमाडबेकु. याकंदरे पृष्टा अंदरे प्रश्नहाकिसिकोंडुवनु घटादिगळल्लि नक्षत्रादिव्यतिरेक (व्यावृत्ति, भेद ) अथवा भेदाभाववन्नु तिळियुवदिल्ल हीगेनु इल्ल. सिंहा-वलोकनन्यायदिंद देवदत्तादिस्वरूपमात्रस्य सिद्धत्वात् एंत पूर्वोक्तवाक्यके उत्तरवाक्यवु विवरणरूपइरुत्तदे एंब भावदिंद हेळुत्तारे एनंदरे स्वरूपमात्र-स्य सिद्धत्वात् एंत पूर्वदल्लि उक्तवायितु आदरे अदु याव आधारदिंद हेळुत्तीरि एंत शंकिसलु मूलकाररु हेळुत्तारे " अन्यथा अंदरे स्वरूपमात्रके सिद्धत्व इल्लदेइद्दपक्षदल्लि प्रश्नवे हुट्टलारदु " इदन्नु टीकारायरु स्पष्टमाडि-तोरिसुत्तारे-कश्चंद्रः इत्यादि प्रश्नहाकिसिकोंबुववनु चंद्रादिस्वरूपवन्नु तिळि-यदे इद्दद्दादरे इदु चंद्रइरुत्तदेएंत अनुवादमाडि कश्चंद्रः एंत ह्यागे केळलिके शक्तनादानु ? अविदितवादंथ वस्तुवु अनुवादमाडिलिक्के शक्यवागुवदिल्ल तेन अंदरे अनुवादमाडिप्रश्नहाकुवदरिंद चंद्रादिस्वरूपवु अवनिगे अरिके (गोत्तु) इरुत्तदे एंत तिळियुत्तदे. पूर्वपक्षकारनु शंकिसुत्तानें-प्रश्नपरिहारगळु स्वरू-पमात्र विषयआगदेहोदरे यावविषयवुळ्ळवगळु एंत केळिदरे मूलकाररु हेळु-त्तारे-" आदकारण याव विशेषणगळिंद विशिष्टइरुत्तदे एंत प्रश्नहाकलु प्रकृष्टप्रकाश हांगु तद्देशकालादिविशिष्टविषयदल्ले वाक्यार्थ कूडुत्तदे एंत अर्थ" ईमूल वाक्यद स्पष्टीकरण टीकादल्लि बरुत्तदे उपपद्यते एंत वाक्य-शेषमाडिकोळ्ळबेकु इदरिंद प्रश्नएंबुवदु सप्तम्यर्थदल्लि कूडुत्तदे. ( स्पष्टी-करण-उपपद्यतएंत शेषपूर्तिमाडदे होदरे प्रश्नके वाक्यार्थ हागु आधारवि-षयत्व इल्लदंतेआगि सप्तम्यर्थअनुपपन्नवागुवदु अदु माडुवदरिंद " प्रश्ने-सति " ईप्रकार सतिसप्तमीअर्थ लाभआगि सप्तम्यर्थद उपपत्तियागुत्तदे. ) प्रकृष्टप्रकाशो यस्य ईप्रकार बहुव्रीहीसमासमाडलागि प्रकृष्टप्रकाशशब्ददिंद चंद्रगे प्रत्यायनागुत्तिरलु अंदरे अन्यप्रधानो बहुव्रीहिएंब नियमानुगुण्यवागि चंद्रबोधवागुत्तिरलु प्रकृष्टप्रकाशविशेषणविशिष्टवाक्यार्थ अल्ल एंत शंकिसि-दरे टीकारायरु हेळुत्तारे-प्रकृष्टप्रकाशएंत मूलदल्लि निर्देशमाडिद्दु भावप्र-धानार्थदल्लि इरुत्तदे सारांश एनायितु एंदरे वेदेशतीर्थरु हेळुत्तारे-प्रकाश-वैशिष्ट्यं वाक्यार्थत्वेन प्राप्तमितिभावः मूलदल्लिद्द आदिपददिंद पूर्वोक्तपक्ष-द्वयगळन्नु ग्रहणमाडतक्कद्दु (स्पष्टीकरण-ईगिन मूलवाक्यदल्लिद्द तद्देशकाला-दि एंबुवदरिंद वर्तमानदेशकालविशिष्टेतद्देशतत्कालवैशिष्ट्यरूप ओंदु पक्ष

हेळिदंते आयितु उळद एरडुपक्षगळु अंदरे तद्देशकालविशिष्टे एतद्देशकालवै-शिष्ट्यएंब पक्ष हागु विशिष्टद्वयैक्यपक्ष ईप्रकार एरडु पक्षगळु आदिपददिंद संग्रहणमाडतक्कद्दु एंत अर्थ ) मूलवाक्यदल्लिद्द पदगळ अर्थवन्नु प्रत्प्रत्येकवि-वरणमाडि हेळि इन्नमेले मूलवाक्यव्याख्यानमाडुत्तारे. तदयं एंब वाक्य-दिंद. आवाक्यद अर्थ हीगे इरुत्तदे—याव कारणदिंद चंद्रादिस्वरूपमात्रदल्लि प्रश्नवु कूडुवदिल्लवो आकारणद्देसेयिंद कश्चंद्रः कोयं एंब वाग्विन्यासदिंद याव विशेषणगळिंद विशिष्टवेंत विशिष्टविषयदल्ले प्रश्न इरुत्तवे एंत अंगी-कारमाडतक्कद्दु प्रश्नवे विशिष्टविषयसंबंधीआगतिरलु परिहारवाक्यक्कादरू ( उत्तरवाक्यक्कादरू ) विशिष्टार्थवे कूडुत्तदे. तत्र अंदरे प्रकृष्टादिवाक्य, हागु सोयमित्यादिवाक्यगळ मध्यदल्लि प्रकृष्टप्रकाशचंद्रः इत्यादिवाक्यवु प्रकृष्टप्रकाशत्वादिविशिष्टचंद्रादिकगळन्नु प्रतिपादनमाडुत्तवे. प्रकाशवैशि-ष्ट्यक्के वाक्यार्थत्वइद्दपक्षदल्लि नक्षत्रादिव्यावृत्तिज्ञानवु ह्यागे आदीतु एंत-शंकिसिदरे हेळुत्तारे—नक्षत्रादिव्यावृत्तियु अर्थदिंद लभ्य एंत तिळिदुको-ळ्ळतक्कद्दु मूलदल्लिद्द तद्देशकालादिविशिष्टएंब वाक्यार्थः एंबअंशवन्नु सोयं एंबवाक्यदिंद व्याख्यानमाडुत्तारे सोयंदेवदत्तः इत्यादिवाक्यवु कदाचित् तद्देशकालविशिष्टक्के एतद्देशकालवैशिष्ट्यवन्नु प्रतिपादनमाडुत्तदे कदाचित् अंदरे वक्तृइच्छानुसारवागि एंत अर्थ. एतद्देशकालवैशिष्ट्यक्के प्रत्यक्षसिद्धत्व इरुवदरिंद अबोध्यत्व ( अनवधेयवचनत्व ) प्राप्तवागुत्तदे एंत पूर्वदल्लि दोषहेळित्तु अदन्नु परिहारमाडुत्तारे एतद्देशकालवैशिष्ट्यएंब वाक्यदिंद एतद्देशकालवैशिष्ट्यक्के सिद्धत्वइद्दाग्यादरू अदक्के तद्देशकालविशिष्टस्य एंत विशेषणइरुवदरिंद दोषपरिहारआयितु श्रोतृबुबुच्छानुरोधदिंद एतद्देशकाल-विशिष्टक्के तद्देशकालवैशिष्ट्य इरुत्तदे. ऐक्यवु अर्थदिंद लभ्य एंत अर्थ. प्रकृष्टप्रकाशश्चंद्रएंब दृष्टांतदल्लि व्यावृत्तिह्यागे अर्थ लभ्यो अदरंते ईदृष्टांत-दल्लि ऐक्यवु ( भेदाभाववु ) अर्थलभ्यएंत अर्थ. श्रोतृबुबुच्छानुसारदिंद विशिष्टद्वयैक्यवादरू अर्थलभ्य एंत तिळिदुकोळ्ळतक्कद्दु ईप्रकार दृष्टांतग-ळिगे विशिष्टविषयत्ववन्नु उपपादनमाडि आदिशब्दद महिमादिंद दार्ष्टांति-कद्वयगळन्नादरू उपपादनमाडुत्तारे एवमेवएंब वाक्यदिंद एवमेव अंदरे ईप्रकारवागि ब्रम्हविदाप्रोतिपरं एंब वाक्यदिंद सामान्याकारदिंद ज्ञातवादंथ ब्रह्मनु याव विशेषणगळिंद विशिष्टनु एंत विशेषणगळन्नु तिळिदुकोळ्ळबेकु एंब इच्छादिंद पृष्टे अंदरे केळल्लु सत्यं ज्ञानमनंतं एंब परिहारदिंद सत्य-

त्वादिविशिष्टवे बोधितवागुत्तदे. ई प्रकारवागि प्रकृष्टप्रकाशादिवाक्यदृष्टांतदिंद उक्तवादंथ अखंडार्थत्ववन्नु लक्षणवाक्यक्के निरासमाडि इन्नुमेले सोयमित्यादिवाक्यदृष्टांतदिंद उक्तवादंथ अखंडार्थत्ववन्नु तत्वमस्यादिवाक्यक्के निराकरणमाडुत्तारे जीवात्मा एंब वाक्यदिंद जीवात्मा इवनु प्रत्यक्षदिंद अंदरे अहं एंब साक्षि प्रत्यक्षदिंद सामान्यतः अंदरे विशेषणआविशिष्टतया ज्ञातवादवनु विशेषाकारदिंद तिळिदुकोळ्ळबेकु एंब अपेक्षादिंद श्वेतकेतुविनिंद कोहं एंत उद्दालकनु पृष्टनादनु तन्न गुरुनाद उद्दालकनिगे श्वेतकेतु इवनु कोहं एंत प्रश्नहाकिदनु एंत अर्थ आग्गे उद्दालकनु तत्वमसि एंत उत्तरकोट्टनु. इदु ह्यागे एंदरे सिंव्हो देवदत्तः एंब दृष्टांतदंते इरुत्तदे. तत्वमसि इदर अर्थ एनु अंदरे–तत् अंदरे तद्वत्, तद्वत् अंदरे ब्रह्मवत्, त्वं अंदरे नीनु, ज्ञानानंदरूपइरुत्तीदि इदक्के आधारवेनु एंदरे तद्गुणसारत्वात्तुतव्यपदेशः एंब ब्रह्मसूत्र तत्वमसि एंब वाक्यदिंद परमात्मसादृश्य विशिष्टनेंत गौणीवृत्तियिंद प्रतिपादनमाडल्पडुत्तदे पुनः शंका भिन्नप्रवृत्तिनिमित्ततया तत्वं पदगळु इरलि अवुगळिगे ओंदे अर्थदल्लि वृत्तिरूपसामानाधिकरण्यक्के असि एंब पददिंद बोधितत्वइरुवदरिंद मुख्यवृतियिंद अभेदवे इल्ले याके प्रतिपाद्यआगबारदु एंदरे हेळुत्तारे–अभेदक्के द्वासुपर्णाइत्यादि प्रमाणबाधितत्वउंटु.

**टीका–ननु वक्त्रधीनत्वे शब्दप्रयोगे कस्माद्गौणप्रयोगः । अस्त्यत्र प्रयोजनं । इहहि महत्वादिगुणवंतं स्वातंत्र्येणात्मानं मत्वा स्तब्धं श्वेतकेतुं निमित्तीकृत्य स्वातंत्र्याभिमानिनो जीवजातस्याहंकारशांतये तत्वमसीत्युच्यते। तत्र यदिविज्ञानानंदघनस्त्वमसीति ब्रूयान्नास्याहंकारशांतिस्स्यात् । अभेदोक्तौतु प्रतिपत्तुर्मीमांसा जायते । न तावदत्र मुख्यार्थः संभवति । प्रमाणविरोधात् । अतः सइव त्वमसीत्यस्यार्थः । नचायमपि संभवति । अप्रसिद्धप्रतिपत्तये खलु प्रसिद्धमुपमानमुपादीयते । यथा गौस्तथा**

गवयइत्यादौ दृष्टत्वात् । नचैवं प्रकृते उभयोरप्यप्रसिद्धत्वात् । अतो नास्योपमानमात्रे तात्पर्यमिति पश्यन् सूर्यसूर्यकयोरिवेश्वरस्य ममचास्ति सादृश्यविशेषइति प्रतिपद्यते । सचानियम्यनियामकभावोपेतइति पश्यन्नहंकारं जहाति । प्रतिबिंबेचात्मनि बिंबसमानधर्माननिषिद्धान्संभावयतीत्यतो लाघवेन बहोरर्थस्य प्रतिपत्तये तत्वमसीत्युच्यते । पारतंत्र्यमात्रोक्तौच राजपुरुषादिवदेव प्रतिपत्तिस्स्यादिति । एवं सत्यज्ञानादिवाक्यानामखंडार्थतां निराकृत्य विशिष्टार्थतासमर्थिता हेत्वंतरेण तामुपपादयति ॥

मूल—अंगीक्रियमाणत्वाद्विशिष्टादेरनिर्वचनीयाभावाच्च सत्यत्वंच सिद्धं ।

टीका—आदिपदेन विशेषणभेदादेर्विशिष्टापेक्षितस्य ग्रहणं । सत्यज्ञानादिवाक्यानि लक्षणया ब्रह्मस्वरूपमात्रपराणीति वदतावश्यंवाच्यार्थोंगीकार्यः । वाच्यार्थद्वारेण लक्षणाया दृष्टत्वात् । नच गंगायां घोषइतिवदन्यदेव वाच्यं । अन्यत्रानंतत्वादीनामसंभवात् । अतो ब्रह्मण्येव सत्यत्वादिविशेषणानि तदुपयुक्तं भेदादिकं विशिष्टाकारश्चांगीकर्तव्यः । तथाच मुख्यार्थस्य ब्रह्मण्यंगीक्रियमाणत्वात् अनुपपत्त्यभावेन किंस्वरूपमात्रलक्षणाश्रयणेन । अथोच्येतांगीक्रियमाणोपि ब्रह्मणि विशिष्टादिर्न सत्यइति न परमार्थब्रह्मतया प्रतिपादयितुं युक्तइत्येवानुपप-

त्तिरिति । मैवं । अंगीक्रियमाणोपि विशिष्टाकारो नतावदसन्नेव । तथा सत्युपलक्षणत्वानुपपत्तेः नच नीलं नभइतिवदुपपत्तिः । तत्रापि प्रतिपत्तेरुपलक्षणत्वात् । नचानिर्वचनीयः । तत्र प्रमाणाभावात्। विशिष्टाकारादिरनिर्वाच्यो विशिष्टाकारादित्वात् । नीलं नभइतिवदितिचेन्न । तत्रानिर्वचनीयाभावेनाप्रसिद्धविशेषणत्वात् । तदेवमसत्वानिर्वचनीयत्वाभावेन विशिष्टादेः सत्यत्वंच सिद्धमित्यनुपपत्त्यभावाद्विशिष्टएव सत्यज्ञानादिवाक्यार्थः ॥

श्री वे.—अभेदोक्ताविति । तत्वमसीत्यभेदोक्तावित्यर्थः ॥ उभयोरपीति । दृष्टांतदार्ष्टांतिकयोरित्यर्थः । यद्यपि जीवात्मा प्रसिद्धस्तथापि श्रुतिप्रतिपाद्यज्ञानानंदघनत्वादिना न प्रसिद्धइत्यर्थः ॥ उपमानमात्रइति । नियम्यनियामकभावशून्यगोगवयादिसाधारणसादृश्यइत्यर्थः ॥ सूर्यसूर्यकयोरिवेति । सूर्यप्रतिसूर्ययोरिवेत्यर्थः ॥ सादृश्यविशेषइति । बिंबप्रतिबिंबभावइत्यर्थः । तदधीनत्वेसति तत्सदृशत्वस्यैव तत्प्रतिबिंबत्वादितिभावः । मीमांसयाप्रतिबिंबत्वज्ञापनाय गौणप्रयोगइत्युक्तं । तज्ज्ञापनेनापि किंप्रयोजनमित्यपेक्षायां प्रतिबिंबत्वांतर्गततदधीनत्वतत्सादृश्ययोर्ज्ञापनप्रयोजनं क्रमेणाह ॥ सचेत्यादिना ॥ संभावयतीति । सचसादृश्यगर्भोपीतिपश्यन्निति शेषः । लाघवेनेति । तत्वमसीत्युक्तिमात्रेणोक्तानेकार्थप्रतीतेरितिभावः । ननु तस्य त्वमसीति मुख्यएव प्रयोगः कस्मान्न कृतः । अहंकारशांतिरूपप्रयोजनस्यैवंसति झडिति लाभादित्यत आह ॥ पारतंत्र्यमात्रोक्ताविति । सत्यमेवमहंकारशांतिर्भवतीति । तथापि तत्र बिंबसमानधर्मसंभावनारूपप्रयोजनांतराला-

भान्न तथा प्रयोगइति भावः । विशेषणभेदादेरादिपदग्राह्यत्वे नियामकमाह ॥ विशिष्टापेक्षितस्येति । अंगीक्रियमाणत्वादितिमूलोक्तहेतुमुपपादयति ॥ सत्येति । वाच्यार्थद्वारेण वाच्यार्थप्रतीतिव्यवधानेन । सत्यत्वादेरन्यत्र कथंचित्संभवात्क्रममुल्लंघ्याह ॥ अनंतत्वादीनामिति॥ मुख्यार्थस्येति । मुख्यार्थत्वस्येत्यर्थः ॥ अनुपपत्त्यभावेनेति । अनुपपत्त्यभावेनचेत्यर्थः । किंस्वरूपमात्रेत्यादिसाध्यं मूलेध्याहृतामितिज्ञेयं ॥ अंगीक्रियमाणइति । सत्यादिपदमुख्यार्थतयांगीक्रियमाणोपि विशिष्टाकारोऽपरमार्थसन्निति न तात्पर्यविषयीभूतपरमार्थसद्ब्रह्मस्वरूपांतर्गतः किंनाम तटस्थःसन्नुपलक्षकः । अन्यथाव्यावृतिबोधासंभवात् । एवंच तटस्थतया व्यावर्तकस्वरूपानंतर्गते उपलक्षणे तात्पर्यायोगात् तात्पर्यानुपपत्तिरेव स्वरूपमात्रलक्षणोपपादिका भविष्यतीति शंकितुर्हृदयं । अतएवाह॥ उपलक्षणत्वानुपपत्तेरिति । नह्यत्यंतासतउपलक्षकतया व्यावर्त्तकत्वं क्वचिद्दृष्टमितिभावः । असतोपि नभोनैल्यस्योपलक्षणत्वं दृष्टमित्याशंक्य निराकरोति ॥ नचेति ॥ प्रतिपत्तेरिति । तस्याश्च सत्त्वात्प्रकृतेच त्वया तस्याअपि मिथ्यात्वांगीकारादितिभावः । यद्यपि व्यावृत्तिधीकालेऽसतोपि काकादेरुपलक्षकत्वमस्ति कदाचित्सत्वंचानुपयुक्तं । तथापि तत्कृतस्योत्तृणत्वादेः सत्त्वाद्युक्तं (यद्यपि कागियु हारिहोदाग्यादरू अदु तन्न चंचुपुटदिंद चिवटिदंथ तृणवु आस्थळदल्लि बिद्दिरुत्तदे अथवा अदर पादमोदलादवुगळ चिन्हगळु अल्ले इरुत्तवे एंत अर्थ ) काकस्योपलक्षणत्वं । सर्वत्र व्यावृत्तिधीकाले उपलक्षणत्वाभिमतस्य तत्कृतस्यवा सत्त्वमुपलक्षणत्वे तंत्रं । नचासतितत्संभवतीतिद्रष्टव्यं । यद्यपि प्रतिपात्तिरात्मधर्मस्तथापि विषयविषयीभावसंबंधेन नभोधर्मोपि भवतीत्युपलक्षणत्वं तस्याइतिध्येयं । उपसंहारव्याजेनाविशिष्टं मूलं योजयन्नेव तत्फलितमाह ॥ तदेवमित्यादिना ॥ अनुपत्त्यभावादिति । वि-

शिष्टादेरपरमार्थत्वे खलुतस्योपलक्षणत्वेन तत्र तात्पर्याभावः । यदातु सत्यत्वं सिद्धं तदा तात्पर्यविषयीभूतब्रह्मस्वरूपांतर्गतविशेषणत्वसंभवेन विशिष्टाकारेपि तात्पर्यसंभवादनुपपत्त्यभावादितिभावः ।

श्री रा. अपौरुषेये वक्तुरभावेन शंकानुदयेपि लोकन्यायमनुसृत्य शंकते ॥ नन्विति ॥ इहहीति । छंदोगोपनिषदीत्यर्थः । इत्युच्यतइत्यन्वयः । स्तब्धमगम्यमित्यर्थः ॥ ( परमात्मह्मागे सज्जनरिंद प्राप्तमाडिकोळ्ळलिक्के योग्यनो अदरंते जीवनु अल्लवेंब भाव. अयोग्यनु एंत अर्थ ) इतिब्रूयादिति । मुख्यार्थवचनोक्तिपक्षे एवंरूपवचनेन भाव्यमितिभावः ॥ नास्येति । अपकर्षानुक्तेरितिभावः। तत्वमसीत्यैक्योक्तावहंकारशांतिप्रकारं व्यनक्ति ॥ अभेदोक्ताविति ॥ सइवेति । अस्य तत्वमसीति वाक्यस्य सइव तत्वमसीत्यर्थइति योजना ॥ उभयोरपीति । जीवात्मनोहमिति प्रसिद्धत्वेपि पराधीनत्वज्ञानानंदात्मकत्वादिना न प्रसिद्धइतिभावः । मीमांसितार्थमाह ॥ सूर्येति ॥ सादृश्यविशेषइति । ज्ञानसुखरूपइत्यर्थः ॥ सचेति । प्रतिबिंबस्य बिंबाधीनत्वादितिभावः । बह्वोरर्थस्येति । तत्प्रतिबिंबत्वस्य तन्नियम्यत्वस्या निषद्धाकिंचिज्ज्ञानसुखसादृश्यविशेषस्येत्येवंरूपबव्हर्थस्येत्यर्थः ॥ पारतंत्र्येति । तदधीनोसीत्युक्तौत्वित्यर्थः ॥ राजेति । राजपुरुषइत्युक्ते राजाधीनत्वमिव पराधीनतैव प्रतीयते न सादृश्यविशेषादीत्यर्थः ॥ एवमिति । प्रकृष्टप्रकाशश्चंद्रइत्यादिष्वित्यादिनोक्तप्रकारेणेत्यर्थः । विशेषणभेदादेर्ग्रहणे हेतुर्विशिष्टापेक्षितस्येति । तथाचेत्यादिना मूलं व्याचख्यासुरुपोद्धातमाह ॥ सत्यज्ञानादीत्यादिना ॥ वाच्यार्थद्वारेणेति । वाच्यार्थधीद्वारेणेत्यर्थः ॥ अन्यदेवेति । लक्ष्यार्थादन्यदेवेत्यर्थः । विशेषणभेदादिकमिति विशेषणविशेष्ययोर्भेदस्तथा विशेषणं तत्संबंधश्चेत्यर्थः । मूलार्थमाह ॥ तथाचेत्यादिना । उपलक्षणत्वानुपपत्तिरिति । सत्यादिपदबोधितसत्यत्वादिविशिष्टाकारो सत्यचित्उपलक्षणमुपेयतेनचात्यं-

तासतस्तत्संभवतीत्यर्थः ॥ यन्नीलमिति । यत् नीलतया प्रतीतं तन्नभइतिवत् सत्यादिवाक्येन यद्विशिष्टाकारतया प्रतीतं तद्ब्रह्मेत्युपपत्तिः । नैल्यस्य तत्रासतएवोपलक्षणत्वदृष्टेरित्यर्थः ॥ प्रतिपत्तेरिति । नैल्यप्रतीतेरित्यर्थः ॥ अनिर्वचनीयइति । विशिष्टाकारइत्यनुषंगः । तस्यचासद्विलक्षणत्वादुपलक्षणता युक्तेतिभावः । मूलशेषार्थमाह ॥ तदेवमिति ।

श्री श्री–वक्तर्यायत्तइति वक्तृधीनइत्यर्थः । अधीनोनिघ्नआयत्तइत्यमरः ॥ कस्मादिति । तत्सदृशोसीति स्पष्टमेव कस्मान्नोक्तमित्यर्थः । स्तब्धं आर्येष्वनतं ॥ ( तन्नकिंत श्रेष्टराळि नम्र आगदे इद्दंथवनु–ताने श्रेष्ठनेंत तिळिदवनु एंत भाव ) उभयोरपीति । अहमितिजीवस्य प्रसिद्धत्वेपि ( व्यासज्यवृत्तिअंदरे उभयपदार्थदमेले इरतक्कंथधर्म । व्यासज्यवृत्तिप्रतियोगिकाभाव अंदरे उभयाभाव एंत अर्थ ) व्यासज्यवृत्तिप्रतियोगिकाभावाभिप्रायेणेदं । एकसत्वे द्वयमिह नास्तीतिवत् । सामान्यतः प्रसिद्धत्वेपि विशेषतो प्रसिद्धत्वादितिवाव्याख्येयं । उपमानं दृष्टांतः ॥ उपमानमात्रइति । नियम्यनियामकभाव रहितगोगवयादिसाधारणसादृश्यमात्रइत्यर्थः । तदधीनत्वरहितसादृश्यमात्रइति यावत् ॥ सूर्यसूर्यकयोरिव । सूर्यतत्प्रतिबिंबयोरिव । सादृश्यविशेषइति । नोक्तरीत्या सादृश्यमात्रं । किंतु बिंबप्रतिबिंबभावरूपस्सादृश्यविशेषइत्यर्थः ॥ सचेति । सादृश्यविशेषइत्यर्थः ॥ नियम्येति । तदधीनत्वसहितइत्यर्थः ॥ पश्यन्निति । तदधीनत्वेसति तत्सदृशत्वरूपप्रतिबिंबत्वं पश्यन्नित्यर्थः । बिंबभूतेश्वरनिष्ठाऽपरिच्छिन्नत्वादिधर्मसंभावनाया अयोगादनिषिद्धानीत्युक्तं । अविरुद्धानीत्यर्थः । तर्हि तदधीनत्वेसति तत्सदृशोसीत्येवं कस्मान्नोक्तमित्यतउक्तं ॥ लाघवेनेति । शब्दलाघवेनेत्यर्थः ॥ बहोरिति । बह्वित्यनेकत्वोपलक्षणं । तदधीनत्वेसति तत्सदृशत्वरूपानेकार्थस्येत्यर्थः । ननु तथापि तत्वमसीति-

गौणप्रयोगमकृत्वा तस्य त्वमसीति मुख्यप्रयोगएव कस्मान्न कृतः। त्वं तस्याधीनोसीति हि तदर्थः । एवमुक्ते अहंकारशांतिरूपप्रयोजनस्य झडिति लाभादित्यतआह ॥ पारतंत्र्यमात्रोक्ताविति । सत्यमेवप्यहंकारशांतिर्भवतीति तथापि यथाराज्ञः पुरुषइत्युक्ते पुरुषस्य भृत्यस्य राजाधीनत्वमेव लभ्यते नतु तत्सादृश्यरूपं प्रतिबिंबत्वं तद्वत् तदधीनत्वरूपपारतंत्र्यप्रतीतेरेव स्यान्नतु तत्सादृश्यरूपप्रतिबिंबत्वप्रतीतिरतस्तल्लाभाय तत्वमसीति गौणप्रयोगः कृतइतिभावः । द्वारेण । तद्बोधद्वारेण । घोषः पल्लीग्रामइत्यर्थः ॥ अन्यदेवेति । यथा गंगायां घोषइत्यत्र लक्ष्यार्थभूततीरव्यतिरिक्तप्रवाहो वाच्यार्थोस्ति एवं ब्रह्मरूपलक्ष्यार्थव्यतिरिक्तं अन्यदेवसत्यादिपदवाच्यं नहीत्यर्थः । कुतो नहीत्यत आह । अन्यत्रेति । लक्ष्यार्थभूते ब्रह्मव्यतिरिक्ते अन्यस्मिन्वस्तुनीत्यर्थः । सत्यत्वादेः कथंचिदन्यत्र संभवादनंतत्वादीनामित्युक्तं । ब्रह्मण्येवेति । लक्ष्यार्थभूते ब्रह्मण्येवेत्यर्थः तदुपयुक्तं भेदादिकमितिविशिष्टापेक्षितं विशेषणभेदादिकमित्यर्थः । विशिष्टाकारः । सत्यत्वादिविशेषणविशिष्टाकारः अनुपपत्यभावेनेत्युक्तमसदित्याशंकते ॥ अथोच्येतेति ॥ ब्रह्मतयेति । ब्रह्माभेदेनेत्यर्थः । तत्स्वरूपांतर्गतविशेषणत्वेनेति यावत् । नयुक्तइत्यन्वयः । किंतु सत्यत्वादिविशिष्टाकारो ब्रह्मणि तटस्थतयोपलक्षणत्वेनैव प्रतिपाद्यतइति वाक्यशेषः॥ इत्येवेति। एवंरूपमुख्यार्थेनुपपत्तिरस्तीत्यर्थः॥ उपलक्षणत्वानुपपत्तेरिति । सर्वथाऽसतः उपलक्षणत्वायोगात् काकादेरपि कदाचित्सत्वादितिभावः ॥ नीलमिति । नभः कीदृशमिति प्रश्ने नीलं नभइति वदति तत्र असतोपि नैल्यस्योपलक्षणत्वं दृष्टं । अतोत्राप्यसतोपि विशिष्टाकारादेरुपलक्षणत्वमस्त्वित्यर्थः ॥ प्रतिपत्तेरिति । ज्ञानस्येत्यर्थः । तथाच नभसिनैल्यं नोपलक्षकं किंतु तज्ज्ञानमेव यन्नीलत्वेन प्रतीतं तन्नभइति तदर्थत्वात् । ज्ञानंच सत्यमेवेति सत्यैस्यवोपलक्षकत्वामिति भावः ॥ इतिवदिति । इतिविशि-

**ष्टाकारवदित्यर्थः ॥ अनुपपत्यभावादिति ॥ मुख्यार्थइतिशेषः ॥**

**टीकेय-अर्थ**—अपौरुषेय वाक्यदल्लि वक्ता इल्लदे इरुवदरिंद शंका-हुट्टदेइद्दरु लोकन्यायवन्ननुसरसि शंकिसुत्तारे ननु एंब वाक्यदिंद. शब्द-प्रयोग माडुवदु वक्ता इवन अधीन इरुत्तिरलु गौणप्रयोग याके माडिद्दारे (स्पष्टीकरण-तत्सदृशोसि ईप्रकार स्पष्टवागि याके हेळलिल्ल. ) हेळदे इरुव विषयदल्लि प्रयोजन उंटु. इह अंदरे छांदोग्य उपनिषदल्लि ई प्रकार हेळिरुत्तदे—महत्वादिगुणविशिष्टनादंथ तन्नन्नु स्वातंत्र्यत्वेन तिळिदु-कोंडु (तानु गुणवंतनु हांगु स्वतंत्रनिद्देने एंत तिळिदु एंब भाव) स्त-ब्धनागि निंतंथ तन्न शिष्यनाद श्वेतकेतुनन्नु निमित्तमाडिकोंडु स्वातंत्र्या-भिमानियादंथ जीवसमूहके अहंकारशांत्यर्थवागि (जीवगे नाने स्वतंत्रनु एंब अहंकार इरुत्तदे. अदु होगबेकु एंब सलुवागि एंब तात्पर्य) तत्वम-सि एंत उद्दालकनिंद हेळल्पट्टदे. विज्ञानानंदघनस्त्वमसि एंत हेळिद्दरे इवन गर्वापहार आगदे इरुवदरिंद अहंकारशांतिआगुत्तिद्दिल्ल. तत्वमसिएंत अभेदहेळिद पक्षदल्लि तिळिदुकोळ्ळुववनिगे जिज्ञासा हुट्टुत्तदे. ईवाक्य-दल्लि मुख्यार्थ संभविसुवदिल्ल. याकंदरे द्वासुपर्णामोदलाद आगमप्रमाणविरो-ध बरुत्तदे. आदकारण तत्वमसि एंब वाक्यक्के अवनंते नीनु इरुत्तीदि एंत अर्थ. ई अर्थवादरू कूडुवदिल्ल याकंदरे अप्रसिद्ध तिळिदु कोळ्ळुवदक्के प्रसिद्ध दृष्टांतवन्नु हेळतक्कद्दु. ह्यागंदरे ह्यागे आकळवो अदरंते काडाकळ विरुत्तदे एंब मातिनंते. प्रकृतदल्लि ईप्रकारविल्ल याकंदरे उभयरिगू (जीवब्रह्मरिगू) अप्रसिद्धत्वविरुत्तदे (स्पष्टीकरण—इल्ले ब्रह्मनु दृष्टांत—जी-वनु दार्ष्टांतनागिरुत्ताने. यद्यपि जीवात्मा प्रसिद्धनिद्दरू श्रुतिप्रतिपाद्य ज्ञानानंदघनत्वदिंद अप्रसिद्धनिद्दाने ) आदकारण नियम्यनियामकभावशू-न्यवादंथ गोगवयादिसाधारणसादृश्यमात्रदल्ले इदक्के तात्पर्यविल्लवंत ति-ळदु सूर्य हांगू सूर्यनप्रतिबिंबगळंते ईश्वर. मत्तु नननगे बिंबप्रतिबिंबभाव-रूपसादृश्यविशेष इरुत्तदे एंत प्रतिपादनमाडल्पट्टदे तदधीनत्वेसति तत्स-दृशत्वस्यैव तत्प्रतिबिंबत्वं एंत तात्पर्य. मीमांसादिंद प्रतिबिंबत्व ज्ञापन माडुवदरगोस्कर गौणप्रयोग (तत्वमसि एंत सामान्यरीतियिंद) माडि-रुत्तद एंत मेले हेळितु आदरे गौणप्रयोगदिंदादरू एनुप्रयोजनवेंत आक्षे-पद्धोरडल्लु प्रतिबिंबत्वांतर्गततदधीनत्व तत्सादृश्यत्वगळ ज्ञापनप्रयोजनवन्नु

क्रमदिंद सचइत्यादिवाक्यगळिंद हेळुत्तारे. सच अंदरे सादृश्यविशेषवु नियम्यनियामकभावोपेत अंदरे तदधीनत्वेसति तत्सदृशत्वरूपप्रतिबिंबत्व इरुत्तदे एंत तिळिदु अहंकारवन्नु परित्यागमाडुत्ताने प्रतिबिंबनादंथ तन्नल्लि बिंबसमानवादंथ अनिषिद्धधर्मगळन्नु (बिंबभूतनादंथ ईश्वरनिष्टअपरिच्छिन्नत्वादि धर्मसंभावनामाडलिक्के अयोगइरुवदरिंद अविरुद्धधर्मगळन्नु) संभावनामाडिकोळ्ळुत्ताने आदकारण लाघवदिंद अंदरे शब्दलाघवदिंद बहोरर्थस्य अंदरे तत्प्रतिबिंबत्व, तन्नियम्यत्व अनिषिद्धवादंथ कोंचज्ञान सुखसादृश्यविशेषरूपबव्हर्थज्ञापनमाडुवदरगोस्कर तत्वमसि एंत हेळलपट्टदे. अहंकारशांतिरूपप्रयोजनक्के ई प्रकार झडिति (तीव्रवागि) लाभआगुत्तिरलु केवलपारतंत्र्यमात्र उक्तवाद पक्षदल्लि राजपुरुषनंते (राजभृत्यनंते) प्रतिपत्तिआगुत्तित्तु (पराधीनतामात्र प्रतीतियागुत्तित्तु होर्तु सादृश्यविशेषादिगळ प्रतीतियागुत्तिद्दिल्ल एंब भाव) ईप्रकारवागि सत्यज्ञानादिवाक्यगळिगे अखंडार्थतावन्नु निराकरणमाडि विशिष्टार्थतावन्नु समर्थन (प्रतिपादन) माडिदरु. इन्नमेले एरडने हेतुविनिंद पूर्णप्रज्ञरु उपपादनमाडुत्तारे अंगीक्रियमाणत्वात् एंब वाक्यदिंद. मूलवाक्यद अर्थ मुंदे टीकादल्लि तथाच एंब वाक्यदिंद श्रीमज्जयतीर्थरु माडुत्तारे. मूलदल्लिद्द आदिपददिंद विशिष्टापेक्षितक्के विशेषणभेदादिगळ ग्रहणविरुत्तदे (स्पष्टीकरण—सत्यज्ञानादिवाक्यगळल्लिद्द विशेषणगळु भिन्नभिन्नविरुत्तवे याकंदरे आवाक्यगळिंग नावु विशिष्टार्थताप्रतिपादन माडुत्तेवे ईमातिगे आधार श्री. रा. ती—विशेषणभेदादेर्ग्रहणे हेतुर्विशिष्टापेक्षितस्य) अंगीक्रियमाणत्वात् एंब मूलोक्तहेतुवन्नु प्रतिपादन माडुत्तारे सत्यज्ञानादि एंब वाक्यदिंद. सत्यज्ञानादि वाक्यगळु लक्षणादिंद ब्रह्मस्वरूपमात्र परइरुत्तवे एंत हेळुववनिंद मोदलिगे वाच्यार्थवन्नु अवश्य अंगीकारमाडलिक्के बेकु. मुंदे वाच्यार्थबोध (ज्ञान) द्वारदिंद लक्षणामाडतक्कद्दु. गंगायां घोषः एंब मातिनंते अन्यवादद्दु इल्ले वाच्यइल्ल (स्पष्टीकरण—गंगायां घोषः (पल्ली, ग्राम. चिक्कहळ्ळि एंत अर्थ) एंब मातिनल्लि लक्ष्यार्थभूत, तीरव्यतिरिक्तप्रवाहवु वाच्यार्थ विरुत्तदे इदरंते इल्ले ब्रह्मरूप लक्ष्यार्थव्यतिरिक्तवादंथ एरडने यावदादरू सत्यादिपदवाच्यार्थ इल्ल आदकारण वाच्यार्थवे ग्रहणमाडबेकु लक्ष्यार्थ स्वीकरिसबारदु एंब भाव) याकंदरे लक्ष्यार्थभूतनादंथ ब्रह्मव्यतिरिक्त अन्यवस्तुविनल्लि अनंतत्वादिगुणगळु असंभवविरुत्तवे. सत्यत्वादिगळु

एंत अन्नदे अनंतत्वादिगळु एंत अंदु श्रुतिक्रमोल्लंघन टीकारायरु याके माडिदरु अंदरे सत्यत्वादिगळु अन्यत्रदल्लि ( जीवादिगळल्लि ) कथंचित्संभविसुत्तवे आदकारण लक्ष्यार्थभूत ब्रह्मनल्ले सत्यत्वादिविशेषणगळु इरुत्तवे एंब मातिगे उपयोगवीलुवंथ भेदादिगळन्नु मत्तु विशिष्टाकारवन्नु अंगीकारमाडतक्कद्दु विशेषणविशेष्यभेदवन्नु हांगु विशिष्टाकारवन्नु तिळिदुकोळ्ळबेकु एंत अर्थ. मूलार्थवन्नु हेळुत्तारे तथाच एंब वाक्यदिंद. मुख्यार्थत्वक्के ब्रह्मनल्लि अंगीक्रियमाणत्वविरुवदरिंद हांगु अनुपपत्तियादरू इरदे इरुवदरिंद स्वरूपमात्रलक्षणाश्रयणमाडुवदरिंद एनु प्रयोजन ? प्रयोजनविल्लवेंत अर्थ. अनुपपत्तिइल्लव्याके ? इरुत्तदे एंब मातुवन्नु परनु अथोच्येत एंब वाक्यदिंद शंकिसुत्ताने मुख्यार्थअंगीकारमाडिदाग्यादरू ब्रह्मनल्लि विशिष्टादिगळु सत्यविल्ल. आदकारण परमार्थ ब्रह्मअभेदतया अंदरे ब्रह्मस्वरूपांतर्गत विशेषणत्वेन प्रतिपादन माडलिक्के युक्तवल्ल. किंतु सत्यत्वादिविशिष्टाकारवु ब्रह्मनल्लि तटस्थरूपउपलणत्वदिंद प्रतिपादन माडलिक्के बरुत्तदे. ईप्रकारवागि मुख्यार्थविषयदल्लि अनुपपत्ति बरुत्तदे एंत परनु अनलु मैवं अंदरे हीगे अनबेडवेंत सिद्धांतकाररु अन्नुत्तारे. अंगीक्रियमाणवाद विशिष्टाकारवु असत् अल्ल. असत् विद्पक्षदल्लि उपलक्षणत्वकूडुवदिल्ल. इदरमेले परन शंकावेनंदरे काकवद्देवदत्तगृहं ईस्थळदल्लि कागियु देवदत्तन मनियमेले इल्लदे इद्दरू काकवद्देवदत्तगृह ( काकोपलक्षितदेवदत्तगृह ) हीगे बोधवागुत्तदे अदरंते ब्रह्मनल्लि रूपत्वादिगुणगळु इल्लदेइद्दरू सत्यत्वादिगळिंद उपलक्षितनेंत याके बोधवागबारदु अंदरे श्रीनिवासतीर्थरु हेळुत्तारे. सर्वथा असत्तिगे उपलक्षणत्व कूडुवदिल्ल. काकवद्देवदत्तगृहं ईस्थळदल्लि कागिगे यावागादरू ( कदाचित्कालदल्लि ) सत्वइद्दद्दरिंदेवे उपलक्षणत्व कूडुत्तदे. शशशृंगदेवदत्तगृहं हीगे वाक्यप्रयोगमाडलिक्के बरुवदिल्ल इदरमेले पूर्वपक्षकारनु पुनः कोटिक्रम एरिसुवदेनंदरे-असद्भूतवादंथ नभोनैल्यं एंब मातिगे उपलक्षणत्व कूडुत्तदे एंदरे सिद्धांतकाररु नच एंब वाक्यदिंद निराकरण माडुत्तारे. नीलं नभः एंब मातिनंते उपपत्ति कूडुत्तदे एंत नीनु अंदरे हागे अनकूडदु याकंदरे तत्रापि अंदरे नभो नैल्यं एंब मातिनल्यादरू प्रतिपत्तिगे ( ज्ञानक्के ) उपलक्षणत्वकूडुत्तदे. ( इवेल्ल मातिनबग्गे स्पष्टीकरण=श्री ती. टि. मेलिंद आकाश यावप्रकार इरुत्तदे एंत ओब्बनु केळलु नीलं नभ एंत उत्तरकोट्टनु

इल्ल नैल्यवु असत् इद्दाग्यादरू अदक्के उपलक्षणत्व कंडदे आदकारण इल्यादरू विशिष्टाकारादिगे असत् इद्दाग्यादरू अदक्के उपलक्षणत्व इरलि अंदरे सिद्धांतकाररु हेळुत्तारे नभसिएंदरे आकाशदल्लि नैल्यवु उपलक्षक अल्ल ज्ञानक्के उपलक्षकत्व उंटु. यावदु नीलत्वेन प्रतीतवायितो अदु नभ इरुत्तदे इष्ट अदर अर्थ. ज्ञानसत्य इरुत्तदे अदक्केवे उपलक्षकत्व उंटु एंत अर्थ.) विशिष्टाकारवु अनिर्वचनीय इरुत्तदे एंत नीनु अंदरे हागादरू अनकूडदु याकंदरे अदक्के प्रमाणविल्ल (स्पष्टीकरण—अनिर्वचनीयत्वक्के असद्विलक्षणत्वइरुवदरिंद अदक्के उपलक्षणता कूडुवदिल्ल. ई स्पष्टीकरण—श्री रा. ती. टि. मेलिंद माडिरुत्तदे) विशिष्टाकारादिः अनिर्वाच्यः विशिष्टाकारादित्वात् नीलंनभइति विशिष्टाकारवत्। ई प्रकार प्रमाण विरुत्तदे एंत नीनु अंदरे अनकूडदु याकंदरे अनिर्वचनीय एंबुवदु इल्लदे इरुवदरिंद अप्रसिद्धविशेषणत्वरूपदोष बरुत्तदे. उपसंहारव्याज (निमित्त) दिंद अवशिष्टवादंथ (उळदंथ) मूलवन्नु योजना माडुवंथवरागि अदर (मूलद) फलितार्थवन्नु टीकारायरु तदेवं एंब वाक्यदिंद हेळुत्तारे. तस्मात् कारणात् ईप्रकारवागि असत्व हांगु अनिर्वचनीयत्व एरडु इल्लदे इरुवदरिंद विशिष्टादिगे सत्यत्ववे सिद्धवायितु आदकारण मुख्यार्थविषयदल्लि अनुपपत्ति इल्लदे इरुवदरिंद विशिष्टवे सत्यज्ञानादिवाक्यार्थ इरुत्तदे.

**टीका—ननु विशिष्टं विशेषणविशेष्यतत्संबंधेभ्यो भिन्नमभिन्नं भिन्नाभिन्नंवा। नाद्यः। दंडपुरुषसंबंधमंतरेण दंडिनोन्यस्याप्रतीतेः। दंडिनमानयेत्युक्तेऽन्यस्यैवानयनप्रसंगाच्च। द्वितीयेतु प्रत्येकं दंडिव्यवहारप्रसंगो विशेषाभावात्। तृतीयेतु दोषद्वयं। व्याघातश्चाधिकः। तथाभेदाभेदिभ्यां भिन्नश्चेदनवस्था। अभिन्नश्चेद्भेदभेदिनोरन्यतरमात्रावशेषः। एवं विशेषणमपि विशेष्याद्भिन्नत्वादिना विकल्प्य दूषणीयं। तदेवं तर्केणाभिन्नत्वादिना दुर्घटत्वाद्विशिष्टादयोऽनि-**

र्वचनीयाः सिद्धाइतिकथं नानुपपत्तिरित्यतआह ॥

मूल—दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकमिति दुर्घटत्वे सुघटत्वेवा नानिवर्चनीयासिद्धिः ।

टीका—इतिशब्दो हेतौ । दुर्घटत्वे सुघटत्वेवेति-तर्केणातिशेषः । तर्केऽनादरं सूचयितुं सुघटत्वेवेत्युक्तं । अनिर्वचनीयेतिभावप्रधानो निर्देशः । विशिष्टादेरित्यनुवर्तते । इदमत्र वक्तव्यं । भिन्नत्वादिना दुर्घटत्वेन विशिष्टादिकमनिर्वचनीयमभिलषता तत्प्रतीतिरंगीक्रियते नवा । नेतिवदन्ननुभवापलापित्वेनोपेक्षणीयः। आद्येन विशिष्टादेर्दुर्घटत्वेप्यनिर्वचनीयत्वसिद्धिः । दृष्टिविरुद्धार्थे तर्कस्य विपर्ययापर्यवसानेनाभासस्यानादरणीयत्वात् । नचदृष्टमपिविशिष्टादिकं तर्केण बाधिष्यतइति वाच्यं । दृष्टार्थंप्रति तर्कस्य बाधकत्वासामर्थ्यात् । नचवक्तव्यं शुक्तिरजतादिकं देहात्मादिकंवा दृष्टमपि तर्केण बाध्यं दृष्टमिति । तत्रापि बलवद्विरोधिदृष्ट्यैव बाधांगीकारादिति ।

श्री वे. व्याघातो विरोधः ॥ एवमिति । यद्यपि विशेषणस्याभिन्नत्वेभिन्नाभिन्नत्वेवा उक्तदोषातिदेशः संभवति । नभिन्नत्वपक्षे । तथापि विशेषणं विशेष्याद्भिन्नमित्यस्य भेदविशिष्टमित्यर्थो वाच्यः। तथाच तत्र भेदो विशेषणं तच्च भेदरूपं विशेषणं भिन्नमित्युच्यमाने तस्यच भेदविशिष्टमित्यर्थे अनवस्थास्यादेवेत्यतिदेशोत्रापि युक्तएवेतिभावः। केचित्तु भिन्नत्वे मेरुमंदरयोरपि विशेषणविशेष्यभावः स्यादिति बहिरेव भिन्नत्वपक्षो दूषणीय इत्याहुः ॥ तर्केणेति यदि विशिष्टादिकं तत्वं स्यात्तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात्त-

थात्वेचानवस्थादिकं स्यात् । नचानवस्थादिदोषदुष्टं भिन्नत्वाद्यन्यतमप्रकारोपेतत्वमंगीकर्तुं शक्यमतो न तत्वं किंत्वनिर्वचनीयमेवेति तर्केणेत्यर्थः ॥ कथंनानुपपत्तिरिति । उक्तरीत्या पुनस्तात्पर्यानुपपत्तिः प्राप्तैवेतिभावः । सुघटत्वइत्यस्यानर्थक्यादाह ॥ तर्कइति । मूले उक्तशंकापरिहारस्य स्फुटमप्रतीतेराह ॥ इदमत्रेति । दृष्टस्य वस्तुन इत्यस्य हृद्युपपादनलब्धं हेतुं स्वयमेवाह ॥ दृष्टिविरुद्धोर्थइति । एवं विशिष्टादेस्तर्केण दुर्घटत्वेपि नानिर्वचनीयत्वसिद्धिरित्यंशं व्याख्याय दृष्टस्येत्यंशं तात्पर्यतोव्याख्यातुमाह ॥ नचदृष्टमिति । बलवद्दृष्टिं विनेत्येतत्संगमयितुमाह ॥ नचवक्तव्यमिति ।

श्री रा. ती. अनुपपत्याभावादित्येतदसिद्धमिति शंकते । नन्विति । दोषद्वयमिति । अन्यस्यैवानयनप्रसंगः । प्रत्येकं दंडिव्यवहारप्रसंगश्चेतिदोषद्वयमित्यर्थः ॥ एवमिति । विशेषणं विशेष्याद्भिन्नंचेद्विशेषणादिभावानुपपत्तिः । मेरुमंदरयोस्तद्भावादर्शनात् । अभेदेपि तथा । एकस्य तद्भावादर्शनात् । चैत्रमानयेत्युक्ते दंडवत आनयनापत्तेश्च । न तृतीयः । दोषद्वयं व्याघातश्चेत्येवं विकल्पदूषणीयमित्यर्थः । सुघटत्वे अनिर्वचनीयत्वाप्रसक्तेर्दुर्घटत्वस्यैव वक्तव्यत्वेन सुघटत्वोक्तिः किमर्थेत्यतआह ॥ तर्केऽनादरमिति । परिष्कारपूर्वं मूलवाक्यं व्याचष्टे । इदमत्रेति । नचेत्यनंतरमितिशब्दो योज्यः ॥ विपर्ययापर्यवसानादिति । विशिष्टाकारस्य विशेषणादिभ्योऽभेदे भेदाभेदेच दोषदर्शनाद्विशिष्टाकारो सन्ननिर्वचनीयोवा न सत्यइति विपर्ययेपर्यवसानं विशिष्टाकारसत्वग्राहि प्रत्यक्षविरोधादसंभवीत्याभासस्तर्को नादरणीयइत्यर्थः । तर्केण बाध्यं दृष्टमिति । यदीदं रजतं सत्स्यात्स्वोचितार्थक्रियाकारि स्यात् । यदि देहएवात्मास्यात् कृतहानादिप्रसंगइत्यादितर्केण बाध्यं दृष्टमित्यर्थः । तत्रापीति । नेदं रुप्यं मम देहमिति बलवद्विरोधिदृष्टस्यैवेत्यर्थः। कालपृष्टत्रिकोणत्वादिविशेषदर्शनजन्यत्वाद्बलवत्वमिति भावः ।

श्री श्री—विशेषाभावादिति । दंडसंबंधवत्वं हि दंडित्वं तद्यदि प्रत्येकं दंडादिस्वरूपं स्यात्तदा वास्तवदंडत्वपेक्षयादंडादेर्विशेषाभावात्प्रत्येकं दंडे पुरुषे तत्संबंद्धेच दंडिव्यवहारप्रसंगइत्यर्थः। दोषद्वयं। भेदाभेदपक्षोक्तं दोषद्वयं ॥ विशिष्टादेरिति । सत्यत्वेन प्रत्यक्षप्रतीति सिद्धस्य विशिष्टादेरित्यर्थः ॥ विपर्ययापर्यवसानेनेति । यदि विशिष्टादिकं प्रतीयेत तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात् । नचान्यतमः प्रकारउक्तदूषणेनांगीकर्तुं शक्यते तस्मात् विशिष्टादिकं न प्रतीयतइति विपर्ययपर्यवसानं न संभवति प्रत्यक्षविरुद्धत्वादित्यर्थः । दृष्टार्थं । प्रत्यक्षसिद्धमर्थं ॥ देहेति । अहं कृष्णइत्यादिदेहधर्माध्यासस्तावदस्ति सच देहात्मतादात्म्यारोपं विनानुपपत्तेर्देहात्मत्वं प्रतीतिसिद्धमित्यर्थः ॥ तर्केणेति । नेदं रजतं दाहच्छेदादिमत्वात् । देहोनात्मा जडत्वादित्यनुमानेनेत्यर्थः ॥ दृष्टचैवेति। अनुमानमूलभूतरजताभावावगाहिप्रत्यक्षेण ममदेहइति हेहात्मभेदग्राहि बलवत्प्रत्यक्षेणैवेत्यर्थः ।

( टिप्पणिगळअर्थ टीकाअर्थदल्ले तरुत्तेने इदरिंद टीकाअर्थविशेषचन्नागि तिळियलिक्के कारणवागुवदु )

टीकय अर्थ—अनुपपत्यभावाद्विशिष्टएव सत्यज्ञानादिवाक्यार्थः एंत पूर्ववाक्यदल्लि सिद्धांतकाररु अंदिद्दरु. अदु अंदरे अनुपपत्यभावात् एंब मातु असिद्धवेंद एंत पूर्वपक्षकारनु शंकिसुत्ताने ननु एंब वाक्यदिंद. विशिष्ट एंबुवदु विशेषण विशेष्य मत्तु तत्संबंधगळिंद भिन्नवो अभिन्नवो भिन्नाभिन्नवो । मोदलनेदल्ल याकंदरे दंडपुरुषसंबंधदहोर्तु दंडिदेसेयिंद ( दंडविशिष्टपुरुषनदेसेयिंद ) अन्यवस्तु ज्ञानवागुवदिल्ल. तात्पर्य—विशेषण, विशेष्य मत्तु तत्सबंध मूरुसहितविशिष्टद ज्ञानवागुत्तदे आदकारण विशिष्टवु विशेषणादिगळिंद भिन्नइरुत्तद एंत हेळलिक्के बरुवदिल्ल मत्तु दंडविशिष्टपुरुषनन्नु करेदुकोंडुबा एनलु अन्यवस्तुवन्नु तेगेदुकोंडु बरुव प्रसंग बरुत्तदे. द्वितियविकल्प अंदरे विशिष्टवु विशेषणादिगळिंद अभिन्नविरुत्तदे एंतेंदपक्षदल्लि भेदव होरद्दु हादद्दारइ प्रत्येकक्के ( विशेषण, विशेष्य हांगु तत्संबधगळिगे ) दंडिएंत अन्नुवप्रसंग बरुत्तदे मूरने पक्षदल्लि एरडू

दोषगळु ( अन्यस्यैवं आनयनप्रसंगः प्रत्येकं दंडिव्यवहारप्रसंगः ) बरुत्तवे इदर होर्तु व्याघात ( विरोध ) दोष ओंदु हेच्चिदु बरुत्तदे. इदरंते भेदवु भेदिगळदेसेयिंद भिन्नवेंदरे अनवस्था, अभिन्नवेंदरे भेदक्के भेदि एंत हांगु भेदिगे भेदवेंत, अन्नुव प्रसंग बरुत्तदे. इदरंते विशेषणवादरू विशेष्यद्देसेयिंद भिन्नत्वादिगळिंद विकल्पमाडि निराकरण माडतक्कद्दु. ( ई वाक्यक्के वेदेशतीर्थरु बरेद टिप्पणिय अर्थवन्नु बरेयुत्तेने—यद्यपि विशेषणक्के अभिन्नत्व हांगु भिन्नाभिन्नत्व पक्षगळल्लि उक्तदोषअतिदेशमाडलिक्के बरुत्तदे, भिन्नत्वपक्षदल्लि मात्र बरुवदिल्ल ( स्पष्टीकरण—विशेषणवु विशेष्यद्देसेयिंद भिन्न इरुत्तदे एंदरे अनवस्थादोष बरुवदिल्ल एंत अर्थ ) आदाग्यादरू विशेषणवु विशेष्यद्देसेयिंद भिन्न इरुत्तदे एंब मातिनल्लि विशेषणवु भेदविशिष्टएंब अर्थ वाच्यवायितु. तात्पर्य एनायितु एंदरे भेदवु इल्ले विशेषणवायितु. भेदरूपविशेषणवु भिन्न एंत अंदकूडले अदक्के भेदविशिष्ट एंब अर्थदल्लि अनवस्था बंदेबरुत्तदे आदकारण अतिदेशइल्यादरू युक्तवे सरि एंब भाव. ( केचित्तु अंदरे केलवरु भिन्नत्वपक्षदल्लि प्रतिपादन माडुवदेनंदरे मेरुमंदरगळिग्यादरू विशेषण विशेष्यभाव हेळुव प्रसंग बंदीतु एंत अंदु भिन्नत्वपक्षवन्नु बहिरंगदल्ले ( ग्रंथदल्लि हेळदे ) निराकरण माडुत्तारे. ) ईप्रकारवागि तर्कदिंद भिन्नत्वादि विकल्पगळिंद साधनमाडुवदु दुर्घटवादद्दरिंद विशिष्टादि अनिर्वचनीय इरुत्तदे एंब मातु सिद्धवायितु आदकारण सत्यज्ञानादिवाक्यगळिगे विशिष्टार्थता हेळिदरे अनुपपत्ति याके बरुवदिल्ल. बरुत्तदे एंत पूर्वपक्षकारनु साधिसुत्ताने.

( स्पष्टीकरण वेदेशतीर्थर टिप्पणीप्रकार—विशिष्टादिगळु सत्यवादपक्षदल्लि भिन्नअभिन्न—भिन्नाभिन्नईप्रकारमूरुविधदल्लि यावदादरू ओंदु प्रकारोपेतवागुत्तिद्दवु हागे आगुवदरिंद अनवस्थादिदोषगळु बरुत्तिद्दवु अनवस्थादिदोषगळिंद दुष्टवादंथ भिन्नत्वादिप्रकारोपेतत्वअंगीकारमाडलिक्के बरुवदिल्ल आदकारण विशिष्टादितत्वअल्ल किंतु अनिर्वचनीय इरुत्तदे एंब तर्कदिंद एंत अर्थ. ) ई अनुपपत्तियन्नु सर्वज्ञरु निराकरणमाडुत्तारेः— " दृष्टवादवस्तुविगे बलवद्दृष्टिहोर्तु अन्यदरिंद बाधकविल्ल आदकारण विशिष्टादिगळिगे तर्कदिंद दुर्घटत्वेन अथवा सुघटत्वेन अनिर्वचनीयत्वासिद्धवागुवदिल्ल " इदर विशेष स्पष्टीकरण टीकावाक्यग

ळल्लि बंदे बरुत्तदे. इतिशब्दवु हेत्वर्थदल्लि दुर्घटत्वे सुघटत्वेवा एंबुवदक्के तर्केण एंब शब्दहाच्चि शेषपूर्तिमाडबेकु. सुघटत्वद विषयदल्लि अनिर्वचनीयत्वद प्रसक्तिये इल्ल ( अनिर्वचनीयत्ववु सुलभदिंद घटनामाडलिक्के बरुवदेइल्लवेंब भाव ) अंदबळिक मूलकाररु दुर्घटत्वइष्टे हेळतक्कद्दितु सुघटत्वोक्ति अनर्थक इरुत्तदे एंत शंकिसिदरे तर्केऽनादरएंब वाक्यदिंद समाधान माडुत्तारे. तर्कविषयदल्लि अनादरवन्नु सूचनमाडुवदरगोस्कर सुघटत्वेवा एंत अंदिद्दारे. विशेष स्पष्टीकरण—ओंदु कालदल्लि तर्कदिंद अनिर्वचनीयत्ववु सुलभरीतियिंद सिद्धवादरू अदु समाधानकारक वागुवदिल्ल याकंदरे अदर उत्पत्ति अनादरणीयवादंथ तर्कदिंद आगिरुत्तदे. मूलदल्लिद्द अनिर्वचनीय शब्दवु भावप्रधाननिर्देशदल्लि इरुत्तदे, अनिर्वचनीय एंबुवदक्के अनिर्वचनीयत्व एंत अर्थ माडतक्कद्दु एंब भाव. मूलदल्लिद्द अनिर्वचनीयशब्दद बेन्नहिंदे विशिष्टादेः इष्टुहाच्चिकोळ्ळबेकु. विशिष्टादेः एंब टीकाशब्दद बेन्नहिंदे सत्यत्वेन प्रत्यक्षप्रतीतिसिद्धस्य इष्टु हच्चिकोळ्ळबेकु ( ई मातु श्रीनिवासतीर्थर टिप्पणिप्रकार बरददे ) मूलदल्लि उक्तशंकापरिहारक्के स्पष्टवागि अप्रतीति इरुवदरिंद ( मूलदमेलिंद शंकाके समाधान स्पष्टवागि तिळियदे इरुवरिंद) इदमत्र एंब वाक्यदिंद स्पष्टमाडि तोरिसुत्तारे. इल्ले इष्टु हेळतक्कद्दु इरुत्तदेः—भिन्नत्वादिगळिंद दुर्घटत्वेन विशिष्टादिकगळु अनिर्वचनीयइरुत्तवे एंत इच्छितनादंथवनिंद तत्प्रतीतिः अंदरे विशिष्टादिकप्रतीतियु अंगीकरसल्पडुत्तदेयो इल्लवो प्रतीतियागुवदिल्लवेंतेंदरे अनुभवापलाप ( अनुभवसिद्धमातु मुच्चिकोंडदोष ) वाद्दरिंद आमातु उपेक्षणीय. ( आदरिसतक्कदल्ल ) प्रतीतिअंगीकारमाडिद पक्षदल्लि विशिष्टादिगळिगे दुर्घटत्वइद्दाग्यादरू अवक्के अनिर्वचनीयत्वसिद्धियागुवदिल्ल. याकंदरे दृष्टिविरुद्धार्थदल्लि तर्कक्के विपर्ययअपर्यवसानवागुवदरिंद आभासक्के अनादरणीयत्वउंटागुत्तदे ( तर्कयावदु मत्तु अदु विपर्ययदिंद पर्यवसानमाडलिक्के याके बरुवदिल्ल मत्तु आभासतर्कह्यागे आयितु ईबग्गे श्रीनिवासतीर्थरु सुलभरीतियिंद स्पष्टीकरणमाडिद्दारे कारण अवरवाक्यवन्ने उदहरिसुत्तने. " यदि विशिष्टादिकं प्रतीयेत तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात् नच अन्यतमः प्रकारउक्तदूषणेनांगीकर्तुं शक्यते तस्मात् विशिष्टादिकं नप्रतीयतइति विपर्ययपर्यवसानं नसंभवति प्रत्यक्षविरुद्धत्वादित्यर्थः " ) विशिष्टादिकगळु दृष्टवादाग्यादरु तर्कदिंद बाधितवागुत्तवे एंत नीनु अंदरे अनकूडदु याकं-

दरे दृष्टार्थवन्नु कुरितु अंदरे प्रत्यक्षसिद्धवाद अर्थवन्नु बाधिसलिक्के तर्कक्के सामर्थ्यविल्ल शुक्तिरजतादिकगळु अथवा देहात्मत्वादिकगळु दृष्टवादाग्यादरू ह्यागे तर्कदिंद बाध्यवागुत्तवो ( स्पष्टीकरण-यदीदं रजतं सत्स्यात्स्वोचितार्थ-क्रियाकारिस्यात् यदि देहएवात्मास्यात् कृतहानादि प्रसंगइत्यादितर्केण ) अदरंते विशिष्टादिकगळु दृष्टवादाग्यादरू बाधित वागुत्तवे एंत नीनु अंदरे अनकूडदु याकंदरे अल्यादरू अंदरे शुक्तिरजत हांगु देहात्मत्वगळल्यादरू अनुमानक्के मूलभूतवादंथ रजताभावावगाहिप्रत्यक्षादिंद हांगु इदु नन्न देहवु एंबुवंथदेहात्मभेदग्राही बलवत्प्रत्यक्षदिंदवे बाधांगीकारवागिरुत्तदे होर्तु नीनु हेळिदंते तर्कदिंद बाधितवागिल्ल.

टीका--ननु नच प्रत्यक्षसिद्धमित्यादिनैवास्यार्थस्यावगतत्वात्किमनेनेति । मैवं । तत्र प्रत्यक्षस्यानुमानागमाबाध्यत्वं प्रतिपादितं इहतु प्रमाणसिद्धस्य तर्काबाध्यत्वमिति प्रमेयभेदात् । अतएव प्रमाणादंगीक्रियतएवेति सामान्येन वक्ष्यति । किंच प्राक् प्रत्यक्षस्यानुमानाद्यबाध्यत्वोपपादने तात्पर्यं । चंद्रप्रादेशत्वादौ व्यभिचारपरिहारात् इहतु तर्कस्य दृष्टिबाधकत्वनिराकरणे । तत्रापिप्रसंगादेर्वक्ष्यमाणत्वादिति । ननु प्रमाणदृष्टार्थे तर्कबाधोऽकिंचित्करइत्येतत्कुतइति । तत्राह ॥

मूल--सर्ववैलक्षण्यांगीकाराद्दुर्घटमपि ब्रह्म प्रमाणादंगीक्रियतएव । ब्रह्म खलु सदेवसोम्येत्यादिप्रमाणैः सत्यमवगतं तर्कविरोधेन दुर्घटंच । तत्र नतावत्तर्कं पुरस्कृत्य प्रमाणमनादृत्य परेणानिर्वचनीयमंगीक्रियते किंतु तर्कविरोधेन दुर्घटमपि प्रमाणात्सत्यमेवांगीक्रियते । तेन परस्यापि सिद्धमेतत् ।

यत्प्रमाणासिद्धेर्थे तर्कोऽकिंचित्करः प्रमाणाविरुद्धस्य तर्कस्य विपर्ययापर्यवसानेनाभासत्वादिति । अन्यथा ब्रह्मापि मिथ्यांगीकरणीयं स्यात् । अथ ब्रह्म कथं परस्य दुर्घटं प्रसक्तमितिचेत् सर्ववैलक्षण्यांगीकारात्। चेतनाचेतनादिभावस्य परेण ब्रह्मण्यनंगीकारात् । इहहि नित्यशुद्धबुद्धमुक्तमखंडैकरसं ब्रह्मानंगीकुर्वाणाः केचिच्चेतनाचेतनतया भावाभावतयावा तत्वं द्विविधमभ्युपयंति । अपरेतु प्रमाणप्रमेयप्रमातृभेदेन त्रिविधं । अन्येतु द्रव्यगुणकर्मसामान्यभेदेन चतुर्विधमित्यादि । तेतु तर्कयंति। यद्युक्तलक्षणं ब्रह्म तत्वं स्यात्तर्हि चेतनाचेतनाद्युक्तविधास्वंतर्भवेत् । नच ब्रह्मवादिनास्त्वेवमितिशक्यते वक्तुं । तेन तस्यचेतनाद्युक्तविधावैलक्षण्यांगीकारात् अन्यथा ज्ञानाश्रयत्वादितत्तल्लक्षणवत्त्वापत्त्या निर्विशेषत्वभंगाद्यापत्तेः। चेतनाद्युक्तविधानंतर्भूतं न तत्वं यथा शशविषाणमिति । एवं तर्केण ब्रह्माणि दुर्घटेसति ब्रह्मवादिनैतावदेव वक्तव्यं । प्रमाणासिद्धं खलूक्तलक्षणं ब्रह्म न पुरुषमतिवैश्वरूप्यजन्मना तर्केण शक्यं निराकर्तुं। किंतुतर्कएव प्रमाणविरुद्धार्थे प्रवर्तमानोयमाभासोयुक्तः। ततो यदि नामैतदुक्तविधासुनांतर्भवति । विधांतरेण तत्वं भविष्यति । चेतनादिलक्षणंवान्यत्प्रकल्प्यांतर्भावयिष्यतइत्यादि। तथा शक्यते प्रकृतेपि वक्तुं दंडी देवदत्तः पर्वतोऽग्निमान् यः सर्वज्ञइत्यादि-

**प्रमाणासिद्धं तावाद्धिशिष्टादि। न तदुक्तविकल्पपांसुभिः शक्यमाच्छादयितुं । तेषामेव प्रमाणाविरुद्धानामाभासत्वात् । ततो यदि नामनोक्तप्रकारसंभवस्तथापि प्रकारांतरेण सत्यं भविष्यति । एतेष्वेववा प्रकारेषु कश्चिन्निर्वाहः कल्पनीयइति ।**

श्री वे. ती.—पूर्वं प्रत्यक्षसिद्धस्याबाध्यत्वमुक्तमिदानीं सामान्येन प्रमाणमात्रसिद्धस्याबाध्यत्वमुच्यतइति भेदो निरूपितः इदानीं प्रागनुमानागमयोर्बाधकत्वं निराकृतंसंप्रतिचतर्कमात्रस्य बाधकत्वं निराक्रियते इत्यतोपि पूर्वोत्तरग्रंथभेदोस्तीत्याह ॥ किंचेत्यादिना । ननु प्रागागमस्यापि बाधकत्वं । न निराकृतं किं त्वनुमानस्यैवेति किं न स्यादित्यत आह ॥ चंद्रेति । चंद्रप्रादेशत्वादिप्रत्यक्षंत्वित्यादिवाक्येनेतिशेषः । यद्यनुमानमात्रस्य बाधकत्वनिराकरणं पूर्वमभिप्रेतं स्यात्तर्हि चंद्रप्रादेशत्वादौ व्यभिचारपरिहारो संगतः स्यात् । नहि तत्रानुमानेन बाधः प्रसक्तः । अत आगमबाधकता निराकरणमपि पूर्वमभिप्रेतमिति भावः ॥ तत्रेति । तर्कस्य बाधकत्वेतिप्रसंगस्योभयविलक्षणत्वंचेदित्यादिना वक्ष्यमाणत्वादित्यर्थः । आदिपदेन नहि दृष्टेर्बलवत्किंचित्प्रमाणमस्तीत्यादिना वक्ष्यमाणबलवत्वाभावपरिग्रहः ॥ तर्कविरोधेनेति । वक्ष्यमाणतर्कविरोधेनेत्यर्थः । सर्ववैलक्षण्यांगीकारादितीममंशं व्याख्यातुमाह ॥ अथेति । चतुर्विधमित्यादीत्यादिपदेन पंचार्थान्गुरवः प्राहुर्विशेषाभाववर्जितान् । सत्यं भविष्यतीति । तथाचात्राप्युक्ततर्कविपर्ययापर्यवसानमिति भावः ॥ निर्वाहः कल्पनीयइति । अनवस्थादिदोषपरिहारेण भिन्नत्वाद्यन्यतमप्रकारोपेतत्वमेव वाच्यं । तथाचेष्टापत्तिरितिभावः । अर्थाः षट्पदार्थाः इत्यादिप्रसिद्धमतपरिग्रहः॥ निर्विशेषत्वभंगाद्यापत्तोरिति । अत्रादिपदेनास्वप्रकाशत्वरूपाचेतन-

लक्षणयोगित्वस्वप्रकाशत्वभंगइत्यादिकं गृह्यते । तर्कस्यविपर्ययेप-र्यवसानं दर्शयति ॥ चेतनाद्युक्तेति । प्रमाणादंगीक्रियत एवेति मूलावयवमुपपादयति ॥ एवमिति ॥ विधांतरेणेति । तथाच कर्तस्य विपर्ययापर्यवसानमितिभावः ॥ अंतर्भावइष्यतइति । तथाच यद्युक्त-लक्षणं ब्रह्मतत्वं स्यात्तर्हि चेतनत्वाद्युक्तविधास्वंतर्भवेदिति तर्कस्येषा-पादनरूपत्वेनाभासत्वं स्यादितिभावः ॥ [ द्रव्य—गुण—कर्म—सामा-न्य—समवाय ( अभाव मत्तु विशेषएरडु बिडुत्ताने ) ईप्रकारगुरुएंब ओब्ब मीमांसकनु ऐदपदार्थगळन्ने हेळुत्ताने ]

श्री रा.—प्रत्यक्षसिद्धमन्येन केनापि बाध्यंदृष्टमित्यनेन पौनरु-क्त्यमाशंक्य विशेषसामान्य विषयतयानिराह ॥ नच प्रत्यक्षेत्या-दिना । ज्ञापकमाह ॥ तत्रेति । प्रत्यक्षस्यदृष्टिबाधकत्वनिराकरणे । नहि दृष्टेर्बलवत्किंचित्प्रमाणमित्यादिनातिप्रसंगव्याघातयोर्वक्ष्यमा-णत्वादित्यर्थः । अनिर्वचनमंगीक्रियतइत्यत्र ब्रह्मेत्यनुषज्यते ॥ आभासत्वादिति । इत्येतपरस्यापि सिद्धमिति पूर्वेणान्वयः ॥ अन्यथेति । तर्कविरोधेन प्रमाणस्यानादरइत्यर्थः । चेतनादिभावा-नंगीकारमात्रेणकथं दुर्घटं तर्केणेत्यतो व्यनक्ति ॥ इहहीत्यादिना । वादिवर्गेत्यर्थः । हीतिप्रसिध्यर्थः । शुद्धं जडामिश्रं बुद्धं ज्ञानरूपं मुक्तं बंधहीनं अखंडैकरसं जातिगुणकर्मावयवादिशून्यं । इत्यादी-त्यादिपदेन विशेषसमवायसहिताद्रव्यादयः षडिति ( द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाय ) वदंतो ग्राह्याः । ततः किमित्यत-आह ॥ यद्युक्तेति । नित्यशुद्धेत्यादिनोक्तेत्यर्थः ॥ उक्तविधेति । उक्तविधायाः सकाशाद्वैलक्षण्यांगीकारादित्यर्थः ॥ तत्तल्लक्षणवत्वेति चेतनादिविधास्वंतर्भावेपि ज्ञानाश्रयत्वविधिप्रत्ययविषयत्वादिचेतन-भावाभावादिलक्षणत्वापातेन निर्विशेषत्वभंगतत्तद्धर्मनिमित्ततत्तच्छ-ब्दवाच्यत्वाद्यापत्तेरितिभावः । एवं चेतनाद्युक्तविधास्वंतर्भवेदित्यु-क्तावापाद्यस्यानिष्टत्वं नच ब्रह्मेत्यादिनोपपाद्यविपर्यये पर्यवसानमा-

ह ॥ चेतनाद्युक्तविधेति । मूलवाक्यशेषं विवृण्वानः परमुखेन समाधिं शिक्षयित्वा तत्समं विशिष्टाकारदौर्घट्येपीत्याह ॥ एवं तर्केणेति । पुरुषमतिवैरूप्यजन्मनेतिबहुव्रीहिः । वैरूप्यं वैचित्र्यं विरुद्धार्थकत्वं-वा ततइति तर्कस्याभासत्वादित्यर्थः ॥ एतदिति । प्रमाणसिद्धं ब्रह्मेत्यर्थः । इत्यादीत्यादिपदेन सर्वविलक्षणस्वभावं सदेव तत्वं भविष्यतीत्यस्य ग्रहः । वक्तव्यमिति पूर्वेणान्वयः । अक्षादिमानत्र-यसिद्धविशिष्टाकाराक्रमेणोदाहरति ॥ दंडीत्यादिना । विशिष्टादी-त्यादिपदेन विशेषणतद्भेदादेर्ग्रहः ॥ नोक्तप्रकारेति । विशेषणवि-शेष्यतत्संबंधेभ्योन्यत्वानन्यत्वादिप्रकारेत्यर्थः ॥ कश्चिन्निर्वाहकइति। विशेष्येणसविशेषाभिन्नं विशिष्टमित्यादिरूपेणेतिभावः ॥

श्री श्री ती. टि.—प्रमाणसिद्धस्येति । सामान्यतः प्रमाणमात्र-सिद्धस्येत्यर्थः । ननुप्रत्यक्षस्यानुमानाबाध्यत्वोपपादनं कृतमित्यस्तु आगमाबाध्यत्वोपपादने तात्पर्यमित्यादिपदेनोक्तं तत्र किंज्ञापक-मित्यतआह ॥ चंद्रेति । प्रत्यक्षसिद्धमन्येन केनाप्यागमेन बाध्यमि-त्युक्तनियमस्य प्रादेशपरिमितश्चंद्रमाइति प्रत्यक्षमागमबाधितमुपल-ब्धमिति व्यभिचारमाशंक्य चंद्रप्रादेशविषयंत्वित्यादिनावाक्येन परिहारादित्यर्थः ॥ वक्ष्यमाणत्वादिति । प्रत्यक्षसिद्धस्य तर्कबाध्य-त्वेनहि युक्तिपराजितोपि क्षुधितइत्यादिनाऽतिप्रसंगस्य वक्ष्यमाण-त्वादित्यर्थः । प्रमाणं ब्रह्मणः सत्यत्वप्रतिपादकं सदेवेत्यादिप्रमाणं दुर्घटमपि ब्रह्मेति शेषः । अनंगीकुर्वाणाः केचित्तार्किकादयः ॥ तत्तल्लक्षणेति । चेतनादिलक्षणेत्यर्थः ॥ पुरुषमति वैश्वरूप्यजन्मने-ति । पुरुषमतेः । पुरुषबुद्धेः यत् वैश्वरूप्यं अनेकरूपत्वं विचित्रत्वं तज्जन्मना विचित्रपुरुषबुद्धिजनितेनेत्यर्थः । विचित्रबुद्धयः पुरुषाः स्वस्वबुध्यनुसारेणानेकधा तर्कयंतीतिभावः । अन्यत् । निर्विशेषत्व-भंगानापादकं । इत्यादिप्रमाणेति । प्रत्यक्षानुमानागमरूपप्रमाणे-त्यर्थः । तेषामेव विकल्पपांसूनामेव ॥

टीकेय अर्थ—नच प्रत्यक्षसिद्धमन्येन केनापि बाध्यंदृष्टं एंत मूलकारस पूर्वदल्लि हेळिद्दार अंदबळिक दृष्टस्य वस्तुनो बलवद्दृष्टिंविना नान्यद्बाधकं एंत इग्गे हेळिद्दु पुनरावृत्तिआगुत्तदे एंत शंकिसिदर विशेषसामान्यविषयतया-हेळिरुत्तदे आदकारण पुनरावृत्तिदोषबरुवदिल्लवेंत नच प्रत्यक्षएंब वाक्यदिंद टीकारायरु हेळुत्तारे नच प्रत्यक्षसिद्धमित्यादिपूर्वोक्तवाक्यदिंदवे ईवाक्यद अर्थ आगुत्तिरलु पुनः इदरिंद एनुप्रयोजन एंत शंकिसतक्कद्दल्ल याकंदरे तत्र अंदरे अल्ले प्रत्यक्षक्के अनुमानआगमबाध्यत्वप्रतिपादनमाडल्पट्टिल्तु तात्पर्य प्रत्यक्षवु अनुमानदिंदागली अथवा आगमदिंदागली बाधितवागुवदिल्लवेंत पूर्वदल्लि हेळित्तु इल्ले प्रमाणसिद्धस्य अंदरे सामान्यतः प्रमाणमात्रसिद्धइद्दद्के तर्का-बाध्यत्वहेळुत्तदे कारणप्रमेयभेद आयितु अतः अंदरे आदकारण प्रमाणादं-गीक्रियतएव एंत सामान्याकारदिंद हेळुत्तारे इदन्ने स्पष्टमाडि तोरिसुत्तारे किंच एंब वाक्यदिंद. पूर्वदल्लि प्रत्यक्षक्के अनुमानाद्यबाध्यत्वप्रतिपादनमाडुव-विषयदल्लि तात्पर्यवित्तु परनु शंकिसुत्तान—पूर्वदल्लि आगमक्कादरू बाधकत्व-निराकरणमाडल्पट्टिल्ल केवल अनुमानक्केमात्र बाधकत्व निराकरणमाडल्पट्टदे हीगे याके इरबारदु एंदरे चंद्रएंब वाक्यदिंद शांतवनमाडुत्तारे चंद्रप्रादेश-त्वादिप्रत्यक्षं इत्यादिवाक्यदिंद. पूर्वदल्लि चंद्रप्रादेशत्वादिगळल्लि व्यभिचारप-रिहारमाडिद्दारे स्पष्टीकरण अनुमानमात्रक्के बाधकत्वनिराकरणवु पूर्वदल्लि अभिप्रेतवागिद्दपक्षदल्लि ( केवल अनुमानदिंद प्रत्यक्षवु बाधितवागुत्तदे एंब मातु निराकरणमाडिद्दागिद्दरे एंत अर्थ ) चंद्रप्रादेशत्वादिगळल्लि व्यभिचार-परिहारमाडिद्दु असंगतवागातित्तु अल्ले केवल अनुमानदिंद बाधप्रसक्तिइल्ल आगमबाधकतानिराकरणवादरू पूर्वदल्लि अभिप्रेतवागित्तु एंब भाव. इग्गे तर्कक्के दृष्टिबाधकत्व निराकरणविषयदल्लि तात्पर्यविरुत्तदे ( सुलभमातिनिंद हेळुत्तेने—तर्कदिंद प्रत्यक्षवु बाधितवागुत्तदे एंब मातु निराकरणमाडुवदु तात्पर्यविरुत्तदे ) तत्र अंदरे दृष्टिबाधकत्वविषयदल्लि ( तर्कदिंद प्रत्यक्षवु बाधितवागुत्तदे एंब विषयदल्लि ) अतिप्रसंग मत्तु व्याघातगळन्नु "नहि-दृष्टेर्बलवत्किंचित्प्रमाणं" एंब वाक्यगळिंद मुंदे हेळुववरु इद्दारे प्रमाणदृष्टा-र्थदल्लि तर्कबाधवु निष्प्रयोजकविरुत्तदे एंब मातु याव प्रमाणदिंद हेळुत्तीरि एंत शंकिसिदरे विद्वज्जनशिखामणियाद मध्वमुनिगळु हेळुत्तारे "(टीकाअ-र्थक्कोडीकरिसि मूलार्थबरेयुत्तेने ) निर्विशेषब्रह्मअनंगीकारमाडुववरिंद अंदरे चेतनाचेतनभेददिंद, भावाभावभेददिंद, द्रव्यगुणकर्मसामान्यभेददिंद तत्व-

द्वैविध्य, चातुर्विध्य अंगीकारमाडुवंथ केलवु वादिगळिंद अंदरे ओंदानोंदु पक्षदल्लि ब्रह्मवु तत्ववादरे अदु चेतनाद्यंतर्गतवागुवदु; परंतु चेतनाद्यंतर्गतवागुवदिल्ल याकंदरे अदु सर्ववैलक्षण्यवेंदु करसिकोळ्ळलपट्टदे आदकारण अदु तत्व अल्ल. ईप्रकार तर्कदिंद ब्रह्मगे दुर्घटत्वचोदना माडुत्तिरलु ब्रह्मवादियादंथ निन्निंद (मायावादियिंद) प्रमाणविरुद्धार्थदल्लि प्रवर्तमानवादंथ तर्कक्केविपर्ययअपर्यवसानदिंद आभासतावन्नु अंगीकरिसि सत्यं ज्ञानं एंब प्रमाणदिंद ब्रह्मतत्ववन्नु ह्यागे निन्निंद स्वीकृतवागिरुत्तदेयो तदापादियल्लि नम्मिंदादरू दंडीदेवदत्तःपर्वतोग्निमान् यः सर्वज्ञः ईप्रकार अनुक्रमदंते प्रत्यक्ष-अनुमान आगमप्रमाणसिद्धविशिष्टादिगे विकल्पपांसुगळिंद (भिन्नमभिन्नं भिन्नाभिन्नंवा एंब विकल्पप्रकारगळिंद) आच्छादन अनर्हत्वबरुवदरिंद (व्यापिसिकोळ्ळलिक्के शक्यआगदे इरुवदरिंद ई विकल्पगळिंद विशिष्टत्ववु बाधित वागदे इरुवदरिंद एंत तात्पर्य) तर्कक्के विपर्ययअपर्यवसानादिंद दुष्टत्व प्राप्तवागुत्तिरलु प्रमाणदिंद विशिष्टादिगळिगे सत्यत्ववु नम्मिंद अंगीकरसलपट्टदे" ब्रह्मनु सदेवसौम्येत्यादिप्रमाणगळिंद सत्यनेंदु ज्ञातनागिरुत्ताने. तर्कविरोधदिंद दुर्घटनेंतादरू ज्ञातनागिरुत्ताने आदरे अदरल्लि मोदलिगे तर्कवन्नु आश्रयिसिकोंडु प्रमाणवन्नु अनादरमाडि परनिंद ब्रह्मगे अनिर्वचनीयत्व अंगीकरसलपट्टिल्ल परंतु वक्ष्यमाणतर्कविरोध बरुत्तदे एंत तिळिदु दुर्घट इद्दाग्यादरू प्रमाणदिंद ब्रह्मगे सत्यता अंगीकरसलपट्टदे इदरिंद परगे ई मातु सिद्धवायितु एनंदरे—याव प्रमाणदिंद सिद्धवादंथ अर्थदल्लि तर्कवु अकिंचित्करइरुत्तदेयो अंथ प्रमाणविरुद्धवादंथ तर्कक्के विपर्ययअपर्यवसानदिंद आभासत्व प्राप्तवागुत्तदे एंब मातु परगे सिद्धवदे अन्यथा अंदरे तर्कक्के आभासत्व हेळदे होदरे अथवा श्रीराघवेंद्रतीर्थर टिप्पणिप्रकार तर्कविरोधदिंद प्रमाणक्के अनादरत्व हेळिदरे ब्रह्मगादरू मिथ्यात्वांगीकार माडुव प्रसंग बंदितु. सर्ववैलक्षण्यांगीकारात् एंब मूलदल्लिद्द अंशवन्नु व्याख्यानमाडुवदरगोस्कर टीकाकारयरु अथ एंब वाक्यदिंद प्रवर्तरागुत्तारे. ब्रह्मनु परनिगे दुर्घटनेंत ह्यागे प्रसक्तनादनु एंदरे परनु ब्रह्मगे सर्ववैलक्षण्यांगीकार माडुत्ताने (एल्ल वस्तुगळिंद ब्रह्मनु विलक्षण इद्दाने एंत अन्नुत्ताने) परनिंद ब्रह्मनल्लि चेतनाचेतनभावक्के अनंगीकारवदे (ब्रह्मनु चेतननू अल्ल अचेतननू अल्ल एंत अन्नुत्ताने एंत अर्थ) चेतनादिभाव अनंगीकारमात्रदिंद तर्कदिंद ब्रह्मनु दुर्घट ह्यागे आदनु एंब मातवन्नु

स्पष्टमाडि तोरिसुत्तारे इह एंब वाक्यदिंद. इह अंदरे वादिवर्गदल्लि केलवरु शुद्धं जडामिश्रं । बुद्धं ज्ञानरूपं । मुक्तं बंधहीनं । अखंडैकरसं जातिगुणकर्मावयवादिशून्यं ईप्रकार ब्रह्मनु इद्दाने एंत अनुत्तारे. ब्रह्म अनंगीकुर्वाणाः अंदरे केलवु तार्किकरु ब्रह्मन आस्तित्वके अंगीकारमाडु-वदिल्ल ब्रह्मने इल्लवेंदेन्नुत्तारे एंत अर्थ ईथवरल्लि केलवरु चेतनाचेतनतया-भावाभावतया तत्ववु द्विविध इरुत्तदे एंत अन्नुत्तारे. केलवरु प्रमाण, प्रमेय प्रमातृभेददिंद तत्ववु त्रिविध इरुत्तदे एंत अन्नुत्तारे. (प्रमेय अंदरे घटप-टादिपदार्थगळु प्रमाण अंदरे प्रत्यक्ष—अनुमान—आगम, घटपटादितिळि-दुकोळ्ळालिक्के साधनगळेंब भाव. प्रमातृ तिळिदुकोळ्ळुवनु) मत्तु केलवरु द्रव्यगुणकर्मसामान्यभेददिंद तत्ववु चतुर्विधवेंत अन्नुत्तारे. ईप्रकार अवरु तर्कमाडुत्तारे एंत अर्थ. आदरे एनु आदहागे आयितु एंत केळिदरे यद्युक्त एंब वाक्यदिंद उत्तरकोडुत्तारे. नित्यशुद्ध बुद्ध एंबुव लक्षणदिंद ब्रह्मत-त्ववु इद्द पक्षदल्लि अदु चेतनाचेतनाद्युक्तविधदल्लि अंतर्भागवायितु. ब्रह्म-वादिना अंदरे मायावादियिंद ई प्रकार इरलि एंत अनलिक्के बरुवदिल्ल. याकंदरे तेन अंदरे मायावादियिंद तस्य अंदरे ब्रह्मगे चेतनाद्युक्तविधावैलक्ष-ण्यांगीकारात् अंदरे चेतनाद्युक्त विधद्देसेयिंद (विधाः इद्दु विधायाः एंत पंचमीमाडबेकु) वैलक्षण्यांगीकारमाडलपट्टदे अन्यथा अंदरे मायावादियु वैलक्षण्य हेळदे होदरे ज्ञानाश्रयत्वादि तत्तल्लक्षणवत्त्वापत्त्या निर्विशेषत्व भंग वागुवदु (स्पष्टीकरण चेतनादि प्रकारगळल्लि अंतर्भाव आदाग्यादरू ज्ञानाश्रयत्व विधिविषयत्वादि आत्मनल्लि ज्ञान अथवा एनादरु धर्म इरुत्तदे अथवा इल्ल वेंबूण) चेतनभावाभावादिलक्षणवत्त्व प्राप्तवाददरिंद निर्विशेषत्व भंगवायितु इष्टअल्ल तत्तद्धर्मनिमित्ततत्तच्छब्दवाच्यत्ववादरू ब्रह्मगे प्राप्त-वायितु एंब भाव. ई प्रकारवागि चेतनाद्युक्त विधगळल्लि अंतर्भाव आगुव प्रसंगबरुत्तदे हांगु निर्विशेषत्वादि भंगवागुत्तदे एंत अनिष्ट आपादनवन्नु नच ब्रह्मवादिना एंब मोदलाद वाक्यगळिंद हेळि तर्कवु विपर्ययदल्लि पर्यवसानवागुत्तदे एंब मातवन्नु चेतनाद्युक्त एंब वाक्यदिंद हेळुत्तारे चेतना-दिउक्त प्रकारगळल्लि ब्रह्मतत्ववु अंतर्भूतआगदे होदरे अदु तत्ववेंदेनसिको-ळ्ळलारदु उदाहरण शशविषाणदंते. प्रमाणादंगीक्रियतएव एंबुवंथ मूला-वयववन्नु (मूलवाक्यद भागवन्नु उपपादनमाडुत्तारे एवं एंब वाक्यदिंद. ईप्रकार तर्कदिंद ब्रह्मनु दुर्घटनागुत्तिरलु (यद्युक्तलक्षणं ब्रह्म तत्वं स्यात्

एंब वाक्यआरंभमाडि निर्विशेषत्वभंगाद्यापत्तेएंब वरिगेवाक्यगळिंद ) मायावादियिंद इष्टे अनतक्कद्दायितु एनंदरे–प्रमाणसिद्धवादंथ उक्तलक्षणवि· शिष्टब्रह्मनन्नु पुरुषमतिवैचित्र्यदिंद हुट्टिदंथ तर्कदिंद ( विचित्रबुद्धियुळ्ळ पुरुषरु स्वस्वबुध्यनुसारवागि अनेकप्रकारदिंद तर्कमाडुत्तारे अंथ तर्कग- ळिंद एंत अर्थ ) निराकरणमाडुवदक्के बरुवदिल्ल तिरुगि तर्कवे प्रमाणवि- रुद्धार्थदल्लि प्रवर्तमानआददोडे आभासयुक्तवागुत्तदे. ततः अंदरे तर्कक्के आभासत्व विरुवदरिंद एतत् अंदरे प्रमाणसिद्ध ब्रह्मनु उक्तप्रकारगळल्लि अंतर्भावआगदेहोदरे विधांतरेण अंदरे एरडने प्रकारदिंद तत्व आदानु अन्यत् अंदरे निर्विशेषत्वभंग अनापादकवादंथ चेतनादिलक्षणवन्नु कल्प- नामाडि अंतर्भाव माडिसबेकु अथवा सर्वविलक्षणस्वभावोपेतवादंथ सत्ववे तत्व वादीतु एंत नीनु ( मायावादि ) अनतक्कद्दायितु ( इत्यादि इदर मुंदे वक्तव्यं एंत पूर्वदल्लि हेळिद शब्दवन्नु तेगेदुकोंडु अन्वयपूर्णमाडिको- ळ्ळबेकु ) तथा अंदरे नीनु ह्यागे हेळुत्तीदि अदे प्रकार प्रकृतदल्यादरू दंडी देवदत्तः दंडविशिष्टनु देवदत्तनु, पर्वतोग्निमान् पर्वतवु अग्निविशिष्टवु यः सर्वज्ञः इवे मोदलाद प्रत्यक्ष अनुमान आगमरूप प्रमाणगळिंद ब्रह्मगे सत्यज्ञानादिविशिष्टत्ववु सिद्धवागुत्तदे ( स्पष्टीकरण—दंडी देवदत्तः ईवा- क्यदल्लि देवदत्तगे दंडवैशिष्ट्यवु प्रत्यक्षदिंद सिद्धवदे पर्वतोग्निमान् धूम. वत्वात् ईस्थळदल्लि पर्वतक्के वन्हिविशिष्टत्ववु अनुमानदिंद सिद्धवदे । यः सर्वज्ञः ईस्थळदल्लि ब्रह्मगे सर्वज्ञत्ववु आगमप्रमाणदिंद सिद्धवदे ईप्रकार प्रमाणत्रयदिंद सत्यज्ञानादिवैशिष्ट्यवु सिद्ध वागुत्तदे तत् अंदरे ईवैशिष्ट्यवु पूर्वोक्तविकल्पपांसुगळिंद ( भिन्न, अभिन्न, भिन्नाभिन्न ) आच्छादनमाडलिक्के शक्यविल्ल ईविकल्पगळिंद विशिष्टत्ववु बाधितवागुवदिल्लवेंब भाव. ईविकल्प- पांसुगळिगे प्रमाणविरुद्धत्वविरुवदरिंद दुष्टत्वइरुत्तदे ततः आदकारण पूर्वो- क्तप्रकारगळु संभविसुयदिल्ल आदकारण प्रकारांतरदिंद विशिष्टवु सत्यआगुत्त- दे अथवा पूर्वोक्तप्रकारगळल्लेवे यावदादरोंदु निर्वाहकवु कल्प्यइरुत्तदे स्पष्टी- करण–विशिष्टअंदरे विशेष्यदिंद अभिन्नइरुत्तदे परंतु अभिन्नइद्दरू अदरल्लि विशेषएंब वस्तुशक्तियु वडंबट्टिद्दरिंद भेदकार्यद निर्वाह आगुत्तदे.

**टीका–एवं विशिष्टादिनिराकरणतर्कस्य विपर्ययाः पर्यवसानमभिधाय प्रतितर्कपराहतिंचाह ॥**

मूल–जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते ।

टीका—यथाविशिष्टं विशेषणादिभ्यो भिन्नमभिन्नंवेत्यादिविकल्पः परेण कृतः । तथा जगतो भिन्नमभिन्नं भिन्नाभिन्नमुभयविलक्षणंवेत्यादिविकल्पो ब्रह्मण्यपि कर्तुं शक्यते । किमतो नहि विकल्पनमेव दोषइत्यतः प्रथमपक्षे दोषमाह ॥

मूल–भिन्नंचेद्भेदादिविशिष्टाच्छुद्धंभिन्नमभिन्नंवेत्याद्यनवस्था ।

टीका–यदि जगतो ब्रह्म भिन्नं स्यात् । तदाभेदेन तत्संबंधेन व्यावर्तकधर्मादिनाच विशिष्टं मिथ्या स्यात् । ततश्चोपास्याभावः प्रसज्येत । माभूद्भेदादिविशिष्टमुपास्यं किंतु शुद्धमेवेतिचेत्तर्हि तच्छुद्धमस्माद्भेदादिविशिष्टाद्भिन्नमभिन्नं भिन्नाभिन्नंवेत्यादिविकल्पयामः । भिन्नंचेत्तदपि भेदादिविशिष्टं मिथ्या स्यादिति प्रतिपत्तव्याभावः अथपुनः शुद्धं प्रतिपत्तव्यमिति ब्रूयात्तदा पूर्ववदनवस्थास्यात्ततश्च न कदापि ब्रह्मप्रतिपत्तिः । अभेदादिपक्षस्तूत्तरन्यायेन दुष्टइति न पृथक् दूषितः द्वितीयं दूषयति ॥

मूल–अभिन्नंचेन्मिथ्यारूपेण जगता ब्रह्मापि मिथ्यैवस्यात् ।

वे. ती. टि. भेदादिविशिष्टादित्यनुवादोपपत्तये तल्लब्धांतदर्थप्रस्तुतिं ( प्रकृतविषयवन्तु ) दर्शयति ॥ तदाभेदेनेत्यादिना ।

आदिपदार्थमाह ॥ तत्संबंधेनेत्यादिना व्यावर्तकधर्मादिनेत्यत्रापि पदेन तत्संबंधपरिग्रहः । विशिष्टमिति हेतुगर्भविशेषणं । इष्टापत्तिमाशंक्याह ॥ ततश्चेति । एवं भेदादिविशिष्टादित्यनुवादलब्धां तदर्थप्रस्तुतिं तदुपपत्तये प्रदर्श्य तव्द्याख्यातुं तन्निवर्त्याकांक्षां (स्पष्टीकरण तन्निवर्त्यअंदरे भिन्नंचेद्भेदादिविशिष्टाच्छुद्धं भिन्नमभिन्नंवा एंब मूलवाक्यद व्याख्यानदिंद निवर्त्य होगुवंथ आकांक्षा अंदरे भेदादिविशिष्टउपास्य आगबेड शुद्धब्रह्मवे उपास्य ई प्रकार पूर्वपक्षिय आकांक्षावन्नु माभूत् एंब वाक्यदिंद टीकारायरु हेळुत्तारे) दर्शयति ॥ माभूदिति । इत्याद्यनवस्थेति मूलगतादिशब्दार्थमाह ॥ अथपुनरिति ॥ उत्तरन्यायेनेति । ब्रह्म जगतो भिन्नमभिन्नंवेत्यादिविकल्पे द्वितीयादिपक्षदूषणपरोत्तरग्रंथन्यायेयेनेत्यर्थः ॥

श्री रा, इत्यादिविकल्पइति । भेदोपिकिं भेदिभ्यां भिन्नोभिन्नोवेत्यादिविकल्पआदिपदार्थः ॥ व्यावर्तक धर्मादिनेति ।

[ इतरभेदजनक (स्पष्टीकरण-ओंदुपदार्थ एरडने पदार्थक्केसेयिंद भिन्नविरुत्तदे एंत हेळबेकादरे यावधर्मगळु हेळबेकागुत्तदो अवक्क व्यावर्तकधर्मगळु एंदेन्नुत्तार. ह्यागंदरे ईश्वरनु स्वभावतः स्वातंत्र्यादिगुणविशिष्टनु—जीवनु अस्वातंत्र्यादिगुणविशिष्टनु आदकारण जीवेश्वरभेदइरुत्तदे ईप्रकारभेदतोरिसुवंथ स्वातंत्र्यअस्वातंत्र्यादिधर्मगळिगे व्यावर्तकधर्मगळु एंदेन्नुत्तारे. )]

तेन विना भेदासिद्धेरितिभावः । विशेषणमादिपदार्थः कोदोषइत्यतआह ॥ ततश्चेति ॥ पूर्ववदिति । शुद्धमस्माद्भेदादिविशिष्टाद्भिन्नमभिन्नवेत्यादिविकल्पस्य भिन्नेचेतद्भेदादिविशिष्टंमिथ्येतिप्रतीतपत्तव्यब्रह्मणोभावइतिदोषस्यचसंभवात्तदर्थं तत्रापि शुद्धं ज्ञेयमित्युक्तौ तत्राप्येवमित्यनवस्थेत्यर्थः ननु जगतोपि भिन्नमभिन्नवेत्यादिविकल्पस्तत्रापि युज्यतइति वाक्ये भेदादादिविकल्पमुक्त्वा भिन्नंचेदितिवाक्ये प्रथमपक्षे तस्य मिथ्यात्वेन ज्ञयाभावइत्युक्तदोषनिरासाय शुद्धं ज्ञेयमित्युक्ते तच्छुद्धं विशिष्टाभिन्नंचेत्पुनर्ज्ञेया-

भावः। तत्रापि शुद्धं ज्ञेयमित्युक्तौ तदपि विशिष्टाभिन्नंचेत् पुनर्ज्ञेयाभावइत्येवं भेदपक्षएवानवस्थादोष उक्तः। भेदादिविशिष्टाच्छुद्धमभिन्नमितिवा भिन्नाभिन्नमितिवा कैश्चिदुक्तेस्ततपक्षदोषः कुतो नोक्त इत्यत आह ॥ अभेदादिपक्षस्त्विति। भेदादिविशिष्टाच्छुद्धमभिन्नंचेन्मिथ्यारूपेणविशिष्टेनाभिन्नं शुद्धं मिथ्यास्यात्। भिन्नाभिन्नंचेत् विशिष्टभिन्नत्वपक्षदोषस्य वैशिष्टयस्यापत्त्या मिथ्यात्वापत्तिः। अभिन्नत्वपक्षदोषस्य मिथ्याविशिष्टाभिन्नत्वप्रयुक्तमिथ्यात्वस्यापत्तिरित्येवं दुष्टइति भिन्नंचेदित्याद्युक्तवक्ष्यमाणन्यायेन सिद्धमिति शुद्धं विशिष्टादभिन्नंचेन्मिथ्यास्यादित्यादिरूपेण पृथङ्नदूषितइत्यर्थः।

श्री टि. उपास्याभावइति। मुमुक्षुणा मिथ्याभूतस्यानुपास्यत्वादितिभावः प्रतिपत्तव्यं ज्ञातव्यं उपास्यमित्यर्थः। ननु भेदादिविशिष्टाच्छुद्धं ब्रह्म अभिन्नमिति पक्षः कस्मान्नदूषित इत्यतआह ॥ अभेदादीति। ब्रह्म जगता अभिन्नमिति पक्षे यो दोष कथ्यते मिथ्यारूपजगदभिन्नत्वेन ब्रह्मणोपि मिथ्यात्वप्रसंगरूपस्तन्न्यायेन भेदादिविशिष्टाच्छुद्धब्रह्मणोऽभिन्नत्वे भेदादिविशिष्टब्रह्मणो मिथ्यात्वात्तदभिन्नस्य शुद्धब्रह्मणोपि मिथ्यात्वं स्यादिति दुष्टत्वान्न पृथग्दूषितइत्यर्थः।

( टिप्पणिगळ अर्थटीकाअर्थदल्लि तरुत्तेने. )

टीकेय अर्थ—टीकाअर्थ बरेयुवदरांकित पूर्वदल्लि बालकारिगे हिंदिन पाठ लक्षदल्लि तंदु कोडुत्तेने. इदरिंद मुंदिन पाठद अर्थ तीव्रलक्षदल्लि बरुत्तदे. पूर्वदल्लि टीकादल्लि बंदद्देनंदरे—ननु विशिष्टं विशेषणविशेष्यतत्संबंधेभ्यो भिन्नमभिन्नं भिन्नाभिन्नंवा। नाद्यः दंडपुरुषसंबंधमंतरेण दंडिनोन्यस्याप्रतीतेः। दंडिनमानयेत्युक्तेऽन्यस्यैवानयनप्रसंगाच्च द्वितीयेतु प्रत्येकं दंडिव्यवहारप्रसंगो विशेषाभावात्। तृतीयेतु दोषद्वयं व्याघातश्चाधिकः। तथा भेदोभेदिभ्यां भिन्नश्चेदनवस्था। अभिन्नश्चेद्भेदभेदिनोरन्यतरमात्रावशेषः। एवं विशेषणमपि विशेष्याद्भिन्नत्वादिना विकल्प्य दूषणीयं

तदेवं तर्केण भिन्नत्वादिना दुर्घटत्वाद्विशिष्टादयोऽनिर्वचनीयाः सिद्धाइति कथं नानुपपत्तिः । ई प्रकार पूर्वपक्षबरलु नावु परनिगे केळिद्देनंदरे—भिन्नत्वादिना दुर्घटत्वेन विशिष्टादिकमनिर्वचनीयमभिलषता तत्प्रतीतिरंगीक्रियतेनवा । नेतिवदन्ननुभवालापित्वेनोपेक्षणीयः आद्येन विशिष्टादेर्दुघटत्वेप्यनिर्वचनीयत्वसिद्धिः । दृष्टिविरुद्धार्थे तर्कस्य विपर्ययापर्यवसानेनाभासस्यानादरणीयत्वात् । ईप्रकार नावु विशिष्टादिगळु प्रतीत आगुत्तवे एंत परनिंद ओडंबडासि तर्कक्के आभासता हेळिदिवि । इन्नमेले विपर्ययपर्यवसान ह्यागे संभविसुवदिल्ल एंब बग्गे श्री श्री तीर्थर टिप्पणि बरेयुत्तेने. यदि विशिष्टादिकं प्रतीयेत तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात् । नचान्यतमप्रकारउक्तदूषणेनांगीकर्तुं शक्यते तस्मात् विशिष्टादिकं न प्रतीयतइति विपर्ययपर्यवसानं न संभवति प्रत्यक्षविरुद्धत्वात् । ईप्रकार तर्कवु विपर्ययपर्यवसान माडोणागलिल्ल तर्कक्के विपर्ययापर्यवसानत्वबरुवदरिंद अदक्के आभासता प्राप्तवायितु. इन्नमेले मुंदिन टीकावाक्यद अर्थ चन्नागि तिळियुत्तदे. इन्नमेले टीकेय अर्थ.

ईप्रकारवागि विशिष्टादिनिराकरणतर्कक्के विपर्ययअपर्यवसानदिंद दुष्टतावन्नु हेळि प्रतितर्कपराहति यन्नादरू मूलकाररु हेळुत्तारे. " विशिष्टदंते ब्रह्मनल्यादरू जगतो भिन्नाभिन्नत्वादि विकल्पगळु कूडुत्तवे " स्पष्टीकरण टीकादल्लि बरुत्तदे. ह्यागे विशिष्टवु विशेषणादिगळिंद भिन्नवो अभिन्नवो हांगु भेदवादरू भेदिगळदसेयिंद भिन्नवो अभिन्नवो इत्यादि विकल्पगळु परनिंद पूर्वदल्लि माडल्पट्टिद्दवो अदरंते जगत्तिनदसेयिंद भिन्नमभिन्नं भिन्नाभिन्नमुभयविलक्षणं वा ईप्रकार विकल्पवु ब्रह्मनल्यादरू माडुवदक्के शक्यवागुत्तदे. पूर्वपक्षकारनु अन्नुत्ताने इदरिंद एनु हेळिदहागे आयितु. केवल विकल्पवे दोषवागुवदिल्ल. हींगे अनलु मूलकाररु प्रथमपक्षदल्लि दोष हेळुत्तारे " जगत्तिन देसेयिंद ब्रह्मनु भिन्ननिद्दपक्षदल्लि भेदादिविशिष्टब्रह्मनु शुद्धब्रह्मनिंद भिन्ननो अभिन्ननो ईप्रकार अनवस्था बरुत्तदे " स्पष्टीकरण टीकादल्लि बरुत्तदे. ब्रह्मनु जगत्तिन देसेयिंद भिन्ननाद पक्षदल्लि भेदादिंद, भेदसंबंधादिंद हांगु व्यावर्तकधर्मादिंदादरु ( याव व्यावर्तकधर्म इल्लदहोतु भेदवे सिद्धवागुदिल्ल वेंब भाव. ) विशिष्टब्रह्मनु मिथ्याआदानु. अदरिंद अवनु मुमुक्षुगळिंद अनुपास्यनादानु (प्रपतित्तव्यं अंदरे ज्ञातव्यं उपास्यं एंत श्रीनिवासतीर्थरु बरेयुत्तारे. ) परनु अन्नुत्ताने—भेदादि-

६३

विशिष्टनादंथ ब्रह्मनु उपास्यनागबेड शुद्धब्रह्मने उपास्यनिरुत्तानें. हीगे नीनु अंदरे नानु निनगे शुद्धब्रह्मनु ईविशिष्टब्रह्मनदंसेयिंद भिन्ननो अभिन्ननो ईप्रकार विकल्पगळु हाकुत्तेने. भिन्ननेंत नीनु अंदपक्षदल्लि भेदादिविशिष्टनु मिथ्याआगुवनु मिथ्याइरोणदरिंद अवनु ज्ञातव्यनागलिक्किल्ल. ( तिळिदुकोळ्ळलिक्के योग्यनागलिक्किल्लनेंब भाव. )

इत्याद्यनवस्थाएंब मूलवाक्यदल्लिद्द आदिशब्दार्थवन्नु हेळुत्तारे अथ एंब वाक्यदिंद. पुनः शुद्धब्रह्मनन्नु तिळिदुकोळ्ळबेकु एंत नीनु अंदरे पूर्ववत् अनवस्था प्राप्तवागुवदु अदरिंद ब्रह्मप्रतिपत्तियु ( ब्रह्मविषयकज्ञान ) एंदिगू आगलारदु अभेदादिपक्षस्तु इल्ले आदिशब्ददिंद भिन्नाभिन्नवेंब पक्षवादरु ग्रहिसबेकु अभेदादिपक्षवु उत्तरन्यायदिंद दुष्टइरुत्तदे एंत तिळिदु पृथक् दूषिसल्पडलिल्ल ( स्पष्टीकरण—भेदादिविशिष्टब्रह्मनदेंसेयिंद शुद्धब्रह्मनु अभिन्ननिरुत्ताने एंब पक्षवु याके दूषिसलिल्ल एंत पूर्वपक्षवंदरे अभेदात् एंब वाक्यदिंद टीकारायरु समाधानमाडुत्तारे ह्यागंदरे—ब्रह्मनु जगत्तिनदेसेयिंद अभिन्ननिद्दाने एंदरे यावदोषवु हेळल्पट्टितो [ मिथ्यारूपवादंथ जगदभिन्नत्वदिंद ब्रह्मगादरु मिथ्यात्वप्रसंगरूप ) अंद न्यायदिंद भेदादिविशिष्टब्रह्मनिंद शुद्धब्रह्मगे अभिन्नत्व हेळिदरे भेदादिविशिष्टब्रह्मगे मिथ्यात्व बरुवदरिंद तदभिन्ननादंथ शुद्धब्रह्मगादरू मिथ्यात्व प्राप्तवागुवदरिंद दुष्टत्व बरुवदु एंत तिळिदु पृथक्दूषिसलिल्ल इदन्नु श्रीनिवासतीर्थर टिप्पणियल्लिद्द बरदिरुत्तदे. ] द्वितीयपक्षवन्नुअंदरे जगतो भिन्नमभिन्नं एंब वाक्यदल्लिद्द अभिन्नं एंब पक्षवन्नु मूलकाररू दूषणमाडुत्तारेः—जगत्तिनदेसेयिंद ब्रह्मनु अभिन्ननिद्दाने एंदपक्षदल्लि मिथ्यारूपवादंथजगत्तिनिंद ब्रह्मगादरू मिथ्यात्व बरुवदु.

**टीका—यदिजगता ब्रह्माभिन्नंस्यात्तदाजगतोमिथ्यात्वात्तदपिमिथ्यैवप्रसज्येत् । यद्यप्यत्रजगदपिसत्यमेवस्यादितिशक्यमापादयितुं । तथापितत्प्रसंगाननुगुणत्वान्नोक्तं । ब्रह्मणोमिथ्यात्वापादनंह्यत्रप्रसक्तं । तच्चस्फुटीकरिष्यामः ॥ तृतीयंनिराचष्टे । भिन्नाभिन्नंचेद्दोषद्वयमपि । ब्रम्हजगतेत्यनुवर्तते ।**

भिन्नत्वेवैशिष्ट्यापत्तिः । अभिन्नत्वेमिथ्यात्वमितिदो-षद्वयं । अपिशब्दाद्व्याघातश्च । ननु भेदाभेदौ क्वचिदस्माभिरंगीक्रियेते । तत्कथमेतत् सत्यं । परो-क्तरीत्यानुक्तादित्यदोषः । चतुर्थं निराकरोति ॥

मूल—उभयविलक्षणंचेदनिर्वचनीयत्वं ब्रम्हणएवा-पतितं ।

टीका—यदि ब्रह्म जगतोभिन्नाभिन्नविलक्षणमंगी-क्रियते तदावक्तव्यं किमयं निषेधसमुच्चयस्तात्विक-उत नेति । नाद्यः । विरोधात् द्वितीये सत्वेनांगी-कृतस्य ब्रह्मणएवानिर्वचनीयत्वमापतितं स्यात् । इदमनेनोक्तं भवति । यदिभेदादिविकल्पानुपपत्त्या विशिष्टादिकमनिर्वचनीयं स्यात् । तदा ब्रह्मापि त-थाप्रसज्येत । भेदादिविकल्पानुपपत्तेस्तत्रापि सा-म्यादिति । एवं प्रसंगमुक्त्वा विपर्यये पर्यवसानमाह ॥

मूल—यद्येवमपि नानिर्वचनीयत्वं ब्रह्मणस्तर्हि-जगतोपि न स्यात् ।

टीका—एवंभिन्नत्वादिविकल्पानुपपत्त्या प्रसक्त-मपि नानिर्वचनीयत्वं ब्रह्मणोंगीक्रियतेचेत्तर्हि विशि-ष्टादेर्जगतोपि न भवत्यविशेषात् । ननु विषमोयमु-पन्यासः । यावता ब्रह्मणः सत्यतां प्रतिपादयंतीत-त्सत्यामित्यादिका श्रुतिः तर्कमाभासयिष्यतीतिचेन्न । विशिष्टादेरपि सत्यत्वे श्रुतेरुदाहृतत्वादित्याह ॥

मूल—विश्वं सत्यमित्यादिवचनमत्राप्युक्तं ।

टीका--अत्रापि विशिष्टादिजगतस्सत्यत्वेपि । अथापिस्यात्तर्कोहि प्रमाणानामनुग्राहकः । अस्तित्र विशिष्टादिनिराकरणतर्कस्यानुग्राह्यं वाचारंभणमित्यादिप्रमाणं नतु ब्रह्मनिराकरणतर्कस्य अतो वैषम्यमित्यत आह ॥

मूल--नसत्तन्नासदुच्यते । असद्वा इदमग्र आसीन्नासदासीन्नोन्नदासीत्तदानीमित्यादिब्रम्हणो मिथ्यात्वे प्रमाणमस्ति ।

टीका--तदुपन्यस्ततर्कस्यानुग्राह्यं भविष्यतीतिवाक्यशेषः ।

श्री वे. टि.

प्रसंगः प्रसक्तिः । प्रकरणमिति यावत् । प्रसंगाननुगुणत्वमेव दर्शयति ॥ ब्रह्मणइति तच्चेति । मिथ्यात्वापादनमनिर्वचनीयत्वं ब्रह्मणएवापतितमित्यत्र स्फुटीकरिष्यामइत्यर्थः। एवंच सर्वेष्वपिपक्षेषु ब्रह्ममिथ्यात्वापादने प्रकरणस्वारस्यंभवतीतिभावः । ननूभयविलक्षणंचेदनिर्वचनीयत्वं ब्रह्मणएवापतितमित्ययुक्तं । उभयविलक्षणत्वेनैव निर्वचनादित्यतो नोभयविलक्षणत्वमपि वास्तवं ब्रह्मण्यंगीक्रियतइतिवक्तुं पृच्छति ॥ किमयमिति विरोधादिति । विधिसमुच्चयवान्निषेधसमुच्चयस्याप्येकत्र विरोधादिति भावः ॥ अनिर्वचनीयत्वमिति उभयविलक्षणत्वस्य वस्तुतोनंगीकारादितिभावः । ननु कोयं प्रतितर्कः यत्पराहतिरस्मतर्कस्येत्याकांक्षायां वाक्यपंचकनिष्पन्नं प्रतितर्कस्वरूपं दर्शयति ॥ इदमनेनेति ॥

श्री रा. टि.-कथं प्रसंगाननुगुणतेत्यतआह ॥ ब्रह्मणइति ॥ स्फुटीकरिष्यामइति । नसत्तन्नासदुच्यतइत्यादिमूलवाक्यव्याख्यावसाने तदनेन विशिष्टनिराकारणेत्यादिग्रंथेनेतिभावः । भिन्नादिविशिष्टप-

दार्थस्य मिथ्यात्वोपपादनाय विशेषणादिना भिन्नाभिन्नत्वादिविकल्पपूर्वमनवस्थादितर्कोक्तौ तस्य दृष्टस्य वस्तुनइत्यादिना विपर्ययापपर्यवसानमुक्त्वा प्रतितर्कपराहतिं वक्तुं सत्यभूतब्रह्मण्यपि मिथ्यात्वाय तदुक्ताभिन्नाभिन्नत्वादितर्कसंचारस्यात्र क्रियमाणत्वाद्ब्रह्मणो मिथ्यात्वं प्रसक्तमिति ध्येयं क्वचिदस्माभिरिति अयावद्द्रव्यभाविगुणगुण्यादाविति भावः परोक्तरीत्येति । विशिष्टं विशेषणादितो भिन्नाभिन्नमिति तृतीये दोषद्वयमिति पूर्वमुक्तत्वादितिभावः । दृष्टस्य वस्तुनइत्यादिना उभयविलक्षणत्वंचेदित्यंतेन ग्रंथेनोक्तंनिष्कृष्यदर्शयति ॥ इदमनेनोक्तमिति । दृष्टस्य वस्तुनइत्यादिग्रंथे नेदं वक्ष्यमाणमुक्तं भवतीत्यर्थः । यद्वा न भिन्नाभिन्नविलक्षणत्वमनिर्वचनीयत्वं । किंतु सदसद्विलक्षणत्वमेवेत्यतः परोक्तरीत्यैव परस्येदमापादनमितिभावेनाह ॥ इदमनेनेति । विशिष्टादेर्जगतइति समानाधिकरणं विशिष्टनिराकरणस्य प्रकृतत्वाद्विशिष्टादेर्जगतइत्युक्तं ॥ यावतेति । यस्मादित्यर्थः

श्री श्री टि.—शिष्यः शंकते ॥ नन्विति । गुणगुण्यादाविति शेषः। अयमर्थः । गुणादेर्गुण्यादिना भेदे अंगुलीद्वयवद्भेदेनोपलंभप्रसंगः । अभेदे अन्यतरमात्रावशेषः । तच्छब्दयोः पर्यायत्वापत्तिरिति दोषद्वयमस्माकमपि समानं विरोधश्च समानइति अनुवादः । भिन्नाभिन्नं चेद्दोषद्वयमित्यनुवादः । अस्मन्मते विशेषेण सर्वमुपपद्यते । परेणतु स नांगीकृतइति भावः । तदुपन्यस्तेति । तत् इति पदच्छेदः । ब्रह्मणोपि मिथ्यात्वे प्रमाणमस्ति तत्प्रमाणं अस्मदुपन्यस्तस्य तर्कस्येत्यर्थः ॥

टीकेय अर्थ—ಜಗತ್ತಿನದೆಸೆಯಿಂದ ಬ್ರಹ್ಮನು ಅಭಿನ್ನನಿದ್ದರೆ, ಜಗತ್ತಿಗೆ ಮಿಥ್ಯಾತ್ವವಿರುವದರಿಂದ ಬ್ರಹ್ಮಗಾದರೂ ಮಿಥ್ಯಾತ್ವ ಪ್ರಾಪ್ತವಾಗುವದು ಯದ್ಯಪಿ ಜಗತ್ತು ಸತ್ಯವೆಂದು ಆಪಾದನಮಾಡಲಿಕ್ಕೆ ಶಕ್ಯವಿದ್ದಾಗ್ಯಾದರೂ ತತ್ಪ್ರಸಂಗ ಅಂದರೆ ಜಗತ್ಸತ್ಯತಾ ಹೇಳುವದು ಇಗಗೆ ಪ್ರಸಕ್ತಇರದೆ ಇರುವದರಿಂದ ಹೇಳಲಿಲ್ಲ ಯಾಕಂದರೆ ಇಗಗೆ ಬ್ರಹ್ಮಗೆ ಮಿಥ್ಯಾತ್ವ ಆಪಾದನಮಾಡುವದು ಪ್ರಸಕ್ತವಾಗಿರುತ್ತದೆ. ತಚ್ಚ ಅಂದರೆ ಮಿಥ್ಯಾತ್ವ ಆಪಾದನವು

अनिर्वचनीयत्वं ब्रह्मणएवापतितं एंब मूलवाक्यव्याख्यानावसरदल्लि स्पष्टमाडि हेळुववरु इद्देवे. भिन्नाभिन्नवेंबुवंथ तृतीयपक्षवन्नु निराकरण माडुत्तारे. जगत्तिनदेसेयिंद ब्रह्मनु भिन्नाभिन्ननिद्दाने एंतेंदपक्षदल्लि एरडु दोषगळु बरुत्तवे. भिन्नाभिन्न इदरमेन्नहिंदे ब्रह्म जगता इष्टु हच्चिकोळ्ळबेकु. भिन्नत्वहेळिदरे वैशिष्ट्यबरुत्तदे. भिन्नअंदरे भेदविशिष्ट एंत अर्थ. अभिन्नत्व हेळिदरे मिथ्यात्व बरुत्तदे. जगत्तु मिथ्याइद्द प्रयुक्त ब्रह्मआदरू मिथ्याआगबेकागुत्तदे. ईप्रकार दोषद्वयगळु. अपिशब्ददिंद व्याघातवन्नादरु ग्रहणमाडतक्कद्दु. (भिन्नअंदु पुनः अभिन्न एंत अंदरे स्ववचनविरोध एंत अर्थ) सिद्धांतिगळशिष्यनु शंकिसुत्ताने—भेदाभेदगळन्नु गुणगुण्यादिगळल्लि नावु अंगीकार माडुत्तेवे ( स्पष्टीकरण—घटक्कु हागु अदररूपक्कू नावु भेद हेळुत्तेव अभेवादरू हेळुत्तेवे एंब भाव. ) ईप्रकार वास्तविकस्थितिइरलु दोषद्वय हागु व्याघात ह्यागे हेळिदरु अंदरे सत्यं एंत अर्धांगीकारमाडि हेळुत्तारेः—परन्यायेन दूषणं हीगे वचनइद्दप्रयुक्त परोक्तरीतियिंद इद्दु अनुवाद इरुत्तदे कारण दोषविल्ल ( स्पष्टीकरण—विशिष्टवु विशेषणादिगळिंद भिन्नाभिन्न इरुत्तदे एंदरे दोषद्वयगळु बरुत्तावे एंत पूर्वदल्लि परनु हेळिद्दनु अदरदे इदु अनुवाद इरुत्तदे) नम्ममतदल्लि विशेष (अभेदेपिभेदकार्यकारी) वडंबष्टिद्दरिंद दोषबरुवदिल्ल. परनु ईप्रकार विशेष वडंबडदे इद्दकारण अवनिगे दोषबरुत्तदे एंब भाव. नाल्कने विकल्पवन्नु मूलकाररु निराकरण माडुत्तारे " उभयविलक्षण एंत अंदरे ब्रह्मगे अनिर्वचनीयत्ववे बंतु. " ब्रह्मजगत्तिगे भिन्नाभिन्नाविलक्षणत्व हेळिदरे स्पष्टीकरण—जगत्तिनदेसेयिंद ब्रह्मनु भिन्नाभिन्नविलक्षणनिद्दाने एंत नीनु अंदपक्षदल्लि निनगे नावु केळुत्तेवे अदक्के उत्तर हेळु. ई निषेधसमुच्चवु ( उभयविलक्षणत्वं ) तात्वीक ( सत्य ) अहुदो अल्लवो. मोदलनेदल्ल याकंदरे विरोध बरुत्तदे.

(स्पष्टीकरण—विधिसमुच्चयदंते निषेधसमुच्चयक्कादरु एकस्थानस्थत्वविरोधइरुत्तदे. विशेषस्पष्टीकरण—ब्रह्मनु जगत्तिनदेसेयिंद भिन्ननु इरुत्ताने अभिन्ननू इरुत्ताने एंब मातु ह्यागे विरुद्ध इरुत्तदो अदरंते भिन्ननू अल्ल अभिननू अल्लवेंब मातवादरू विरुद्धइरुत्तदे ) द्वितीयविकल्प-तात्वीक अल्लवेंदरे सत्यत्वेन अंगीकृतनादंथ ब्रह्मगे ( ब्रह्मओंदु सत्य उळद प्रपंचवेल्ल मिथ्या एंत परनु अन्नुत्ताने ) अनिर्वचनीयत्व प्राप्तवागुवदु. प्रतितर्कयावदु ? यावप्रतितर्कपराहति नम्म (सिद्धांतकारर) तर्कक्के बरुत्तदे ? एंत आकांक्षापुट्टलु

इदरमेलिन मूलकारर पंचवाक्यगळिंद निष्पन्नवादंथ (होरटंथ-उत्पन्नवादंथ) प्रतितर्कस्वरूपवन्नु इदमनेन एंब वाक्यदिंद टीकारायरु हेळुत्तारे. अनेन अंदरे दृष्टस्य वस्तुनइत्यादिग्रंथदिंद इदम् अंदरे वक्ष्यमाणवु उक्तं भवति अंदरे हेळिदंते आगुत्तदेः-भेदादिविकल्पद अनुपपत्तियिंद विशिष्टादिकवु अनिर्वचनीयआदरे ब्रह्मनादरु अनिर्वचनीयनादानु याकंदरे भेदादिविकल्प-अनुपपत्तिगे ब्रह्मनल्यादरु साम्यउंटु एवं प्रसंगमुक्त्वा अंदरे ईप्रकार हीगादरे हीगागुवदु एंब मातवन्नु (प्रतितर्कवन्नु) हेळिविपर्ययदल्लि पर्यवसान-वन्नु मूलकाररु हेळुत्तारे यद्येवं एंब वाक्यदिंद. मूलद अर्थ टीकादल्लि बरु-त्तदे. ईप्रकारवागि भिन्नत्वादिविकल्पानुपपत्तियिंद प्रसक्तवादाग्यादरु (अनि-र्वचनीयत्वप्राप्तवादाग्यादरू) ब्रह्मगे अनिर्वचनीत्व अंगीकारमाडदे इद्दरे वि-शिष्टादिरूपजगत्तिगादरू अनिर्वचनीयत्वकूडुवदिल्ल याकंदरे विकल्पानुपपत्ति साम्यउंटु पूर्वपक्षकारनु अन्नुत्ताने-निम्म उपन्यासवु (निरूपण) विषम-इरुत्तदे याकंदरे यावताअंदरे यस्मात्कारणात् तत्सत्यमित्यादिश्रुतिगळु ब्रह्मगे सत्यतावन्नु प्रतिपादनमाडुत्तावे आपक्षदल्लि तर्कवन्नु आभासमाडुत्तावे एंत नानु अन्नुत्तेने एंदरे अनकूडदु याकंदरे विशिष्टादिगादरू सत्यत्वविषयदल्लि (विशिष्टादिगळु सत्यइरुत्तवे एंब बग्गे) श्रुतिगळु उंटेंदु मूलकाररु अवु-गळन्नु उदहरिसुत्तारेः-"विश्वं सत्यं इत्यादिवचनगळु विशिष्टादि जगत्स-त्यत्वविषयदल्लि उंटु" मूलदल्लिद्द अत्रापि एंब पदक्के विशिष्टादिजगत्सत्यत्व-विषयदल्यादरु एंत अर्थमाडबेकु. पूर्वपक्षकारनु अन्नुत्ताने-आदाग्यादरू मुंदे नानु हेळिदंते इरदिद्दरे नानु हेळिदंते आदीतु-तर्कवु प्रमाणगळिगे अनुग्राहक इरुत्तदे (श्रुतिअनुग्राह्यतर्कअनुग्राहक एंत अर्थ. विशेषस्पष्टीकरण-श्रुतिसहा यइद्दरे तर्कवु आदरिसतक्कद्दु इल्लदिद्दरे इल्ल श्रुतिप्रमाण मुख्यएंत अर्थ) विशि-ष्टादिनिराकरणतर्कक्के अनुग्राह्यरूपवादंथाद्दु वाचारंभणं इत्यादिप्रमाणइरुत्तदे ब्रह्म निराकरणतर्कक्के (ब्रह्मनु सत्य इल्ल एंब मातिगे) श्रुतिप्रमाणइल्ल आदका-रण निम्म उपन्यास विषम इरुत्तदे हीगे पूर्वपक्षकारनु अनलु सिद्धांतकाररु ब्रह्ममिथ्यात्वविषयदल्लि नसत्तन्नासदुच्यते इत्यादि श्रुतिगळन्नु उदहरिसु-त्तारे. (प्रसंगसंगतियिंद पूर्वपक्षकारन मातु निराकरणमाडुवबग्गे हेळिद्दारे वास्तविक श्रुतिअर्थ बेरेइरुत्तदे) तदुपन्यस्य तर्कस्यानुग्राह्यं भविष्यति इष्टु मूलवाक्यक्के हाचि शेषपूर्तिमाडिकोळ्ळबेकु ब्रह्मगादरु मिथ्यात्व हेळुव-विषयदाल्लि श्रुतिप्रमाण इरुत्तदे नावु उपन्यास माडिदंथ तर्कक्के ई उद-

हरिसिद श्रुतिप्रमाणवु अनुग्राह्यरूप विरुततद एंत अर्थ.

टीका--ननु जगदेवमिथ्या । तत्प्रातियोगिकभेदादिविशिष्टंच । अतः कथं तद्भिन्नमित्यनेन ब्रह्मणः शुद्धत्वहानिरुक्तेतिचेन्न । परस्पराश्रयप्रसंगात् । वियदादिजगतो विशिष्टस्य मिथ्यात्वसिद्धये सांप्रतमपि परस्य प्रवर्तमानत्वादिति । तदनेन विशिष्टादि निराकरणतर्कस्य प्रातितर्कपराहतिं प्रतिपादयता जगतो भिन्नमित्यादिना ग्रंथेन व्याप्तिवैकल्यंच दर्शितं । अननिर्वचनीयेपि ब्रह्मण्यस्य तर्कस्य संचारोपपादनात् । अखंडं ब्रह्मैव तत्वमित्यस्य।र्थस्योपपत्तये खल्वयं परेण तर्कोवतारितः । तस्य ब्रह्मण्यपि प्रवेशोपपादनेनेष्टा विघातित्वाख्यतर्कांगवैकल्यमपि प्रतिपादितं । इष्टापादनरूपताच यथा संभवमूहनीयेत्यंगपंचकवैकल्यात्तर्काभासोयामिति स्थितं । तर्कः प्रमाणदृष्टार्थबाधनस्य नेष्टे कुतइति पृष्टवतः प्रतिवादिनो दत्तमुत्तरं । सुहृद्भावेन पृच्छंतं प्रत्याह ॥

मूल—नहिदृष्टेर्बलवात्किंचित्प्रमाणं ।

टीका—बाधकेनाहि बलवता भवितव्यं । विरोधमात्रेण बाधकत्वे वैपरीत्यस्यापि प्रसंगात् । नहिविशिष्टादिजगद्विषयप्रत्यक्षादिदृष्टेः सकाशात्तर्कस्य प्राबल्यमस्ति । येनासौ तद्बाधकः स्यादिति कुतोन तर्कोदृष्टेर्बलवानित्यतआह ॥

मूल—नहि युक्तिपराजितोपि क्षुधितो नान्नमत्ति ।

टीका—यदाहि देशविशेषस्थेन पुरुषेणान्नेदृष्टेदेशांतरस्थोऽन्यस्तु स्वानुभूतान्नरसादिकं तत्रानुपलभमानोयदीदमन्नं स्यात्तदा ( सं ) प्रतिपन्नरसाद्युपपन्नं स्यात् । नचैवमतो नान्नमेतदिति यदि तर्कयेत्तदा कथं । यदि तर्को दृष्टेरपि बलवान्स्यात् तदायमपि तर्को बलवत्त्वादन्नदृष्टिं बाधेत । ततश्च दृष्टान्नोपि तर्केणानन्नत्वं प्रतिपन्नोदृष्टिमनादृत्य नाद्यात् । नचैतदस्ति । तेन ज्ञायते न तर्कोदृष्टेर्बलवानिति । अत्र युक्तिपराजितइति गुडजिह्विकेव । ननतुपराजितएव । पराजितत्वंहि तद्विषयाभ्युपगमः । सतिच तस्मिन्नहि नात्तीति न स्यात् । उपादीयमानंच तत्क्षुन्निवृत्याद्यर्थं क्रियाक्षमंच न स्यादित्यतिप्रसंगांतरसूचनाय क्षुधित इत्युक्तं ।

श्री वे. ती. टि.—शुद्धत्वहानिरिति । सत्यभूतमेव विशिष्टादिकं शुद्धत्वविघातकं नारोपितं । नह्यारोपितेन नीलिम्ना गगनस्य नीरूपत्वमपगच्छति । तद्वदितिभावः ॥ परस्पराश्रयेति । जगतो मिथ्यात्वसिद्धौ तत्प्रतियोगिकभेदादिविशिष्टस्यापि मिथ्यात्वेन ब्रह्मणः शुद्धत्वाहानिः । तदहानौच भिन्नत्वपक्षे दोषाभावेन प्रतितर्कस्याप्राप्त्या तत्पराहत्यभावेन विशिष्टादिनिराकरणतर्केण विशिष्टादिजगन्मिथ्यात्वसिद्धिरिति परस्पराश्रयप्रसंगादित्यर्थः ॥ सांप्रतमपीति । अद्यापीत्यर्थः अनिर्वचनीयेपीति । यत्तत्त्वं तद्भिन्नत्वाद्यन्यतमप्रकारोपेतमिति न व्याप्तिः तत्वरूपेपि ब्रह्मणि भिन्नत्वाद्यन्यतमप्रकाराभावस्योपपादितत्वादितिभावः । अप्रयोजकत्वान्नतर्कांगभूतव्याप्तिरित्यनेनाहेति कश्चित् । इष्टावि-

घातितत्वाख्यतर्कांगांतरवैकल्यस्यापि प्रदर्शनाय परस्येष्टं दर्शयति । अखंडमिति ॥ इत्यस्येति । विशिष्टादेः सत्यत्वे ब्रह्मैवतत्त्वमित्यस्यानुपपत्तेस्तन्मिथ्यात्वसाधकतर्कस्योक्तप्रतिपत्ति–जनकत्वमितिभावः ॥ यथासंभवमिति । यदि विशिष्टादिकं तत्त्वं स्यात्तर्हि भेदाद्यन्यतमप्रकारोपेतं स्यादित्यापादने इष्टापत्तिः । तथाहि विशिष्टं क्वचिद्विशेषणेन दंडादिनाभिन्नं क्वचिद्ब्रह्मस्वरूपानंदादिनाविशेषणेनचाभिन्नं । विशेष्येणतु खंडितत्वे भिन्नाभिन्नं । यावद्वस्तुभावित्वेचानंदादिविशिष्टं विशेष्येण ब्रह्मणात्यंताभिन्न । विशेषणमपि विशेष्येण क्वचिद्भिन्नं । यथा दंडादिकं । क्वचिदत्यंताभिन्नं । यथा आनंदादिकं । क्वचिद्भिन्नाभिन्नं । यथा फलश्यामतादिकं । भेदस्तु धर्मिस्वरूपभूतएव । अत्र सर्वत्रोक्तदोषास्तु स्वव्याहतिकरा उपेक्ष्या एव । विशेषबलेन भेदकार्यादिकमुपपद्यते । तस्य भेदकार्यनिर्वाहकत्वादिना धर्मिग्राहकप्रमाणसिद्धत्वादित्यादिकमूहनीयमिति । तदिदमुक्तं । यथासंभवमिति तदा कथमिति । तर्को दृष्टेर्बलवानितिशेषः । स्पष्टीकरण यदीदमन्नं स्यात्तदा संप्रतिपन्नरसाद्युपेतं स्यात् नचैवं अतो नान्नमेतादिति यदि तर्कयेत्तदा कथं ( ई टीकावाक्यद मुंदे ‘तर्कोदृष्टेर्बलवान् ’ इष्टु शेषपूर्तिमाडबेकु. इदरमेले वदेशतर्थियिह्लि बरद शंका एनंदरे तर्कवु प्रत्यक्षदकिंत बलिष्ठवे इरुत्तदे. ‘कथं बलवान्’ अंत ह्यागे अन्नुत्तीरि अंदरे नहियुक्तिपराजितोपि एंब मूलोक्तविपर्ययपर्यवसानलब्धतर्कस्वरूपवन्नु यदि तर्कोबलवान् स्यात् एंब वाक्यदिंद तोरिसुत्तारे.) ननु का कथंता । तर्को दृष्टेर्बलवानेवेति भ्रमइत्याशंकायां । नहि युक्तिपराजितोपीत्यादिमूलोक्तविपर्ययपर्यवसानलब्धतर्कस्वरूपं दर्शयति ॥ यदीत्यादिना । नचैतदस्तीति । नहि युक्तिपराजितोपि क्षुधितो नान्नमत्तीत्यस्तीत्यर्थः । ननु युक्तेर्दौर्बल्ये कथं तत्पराजितत्वं युक्तिपराजितइत्यनेनोच्यतइत्यतआह ॥

अत्रेति । ननु क्षुधितपदं व्यर्थमित्याशंकाया रागातिरेकाद्भ्रम-संस्काराद्वाऽदनेप्रवृत्तिरित्याशंकानिवर्तकतर्कांतरसूचकत्वान्न व्यर्थ-मित्याह । उपादीयमानं चेति ॥

श्री रा. ती. टि.—भिन्नत्वपक्षे दोषो नेति शंकते नान्विति ॥ परस्परेति । विशिष्टस्य वियदादिरूपजगतश्च मिथ्यात्वसिद्धौ ब्रह्मणः शुद्धत्वासिद्धिः तत्सिद्धौच तन्निर्वाहाय विशिष्टादेर्मिथ्या-त्वसिद्धिरिति परस्पराश्रयइतिभावेन विशिष्टादेर्मिथ्यात्वसिद्धिं व्य-नक्ति ॥ वियदादीति । सांप्रतमिदानीमित्यर्थः । प्रतितर्कपराह-त्युक्त्यान्यदपि लब्धमित्युपपादयन्द्दष्टस्येत्यादिनोक्तमुपसंहरति ॥ तदनेनेति । तत्तस्मादंगपंचकवैकल्यादित्यादिनाऽन्वयः । अनेनेत्यस्य विवरणमित्यादिना ग्रंथेनेति । कथमित्यतो व्यनक्ति ॥ अननि-र्वचनीयेपीति । साध्याभावोपपादनायैतदुक्तिः ॥ तर्कस्येति । विकल्पपूर्वमुक्तानवस्थादिरूपतर्कस्येतिवा भिन्नत्वादिविकल्पासहत्व-रूपतर्कस्येतिवार्थः । इष्टाविघातकत्वरूपं यदंगांतरं तदपि नेति-परस्येष्टोक्तिपूर्वमाह ॥ अखंडब्रह्मैवेत्यादि । प्रतिपादितमिति । इत्यादिनाग्रंथेनेत्यनुषंगः ॥ यथासंभवमिति । भेदपक्षे यानवस्थो-क्तासेष्टैव भेदानभ्युपगमादभेदपक्षे भेदाभेदपक्षेचोक्तदोषावपीष्टा-वेव । पक्षद्वयेपि सविशेषत्वाभ्युपगमेन निर्विशेषाभेदादिपक्षे प्रागु-क्तदोषस्यांगीकारादित्यूहनीयेत्यर्थः ॥ दत्तमुत्तरमिति । अंगपं-चकवैकल्यादाभासोयं तर्क इत्युत्तरं दत्तमित्यर्थः ॥ विशिष्टादी-ति । प्रकृष्टप्रकाशश्चंद्रइति । सोऽयंदेवदत्तः दंडी चैत्रः पर्वतोऽ ग्निमानित्यादौप्रकृष्टप्रकाशत्वादिविशिष्टादिजगद्विषयप्रत्यक्षानुमाना-दिज्ञानस्येत्यर्थः । प्रतिपन्नइति । मन्यमान इत्यर्थः ॥ नाद्या-दिति । न भक्षयेदित्यर्थः । नचैतदस्तीति । नाद्यादित्येतन्नास्तीति विपर्ययेपर्यवसानं । ननुतर्को दुर्बलः तत्कथं युक्तिपराजितइत्युक्ति-रित्यतआह ॥ अत्र युक्तिपराजितइति । गुडयुक्ता जिव्हा गुड-

जिव्हिका ( स्पष्टीकरण—गुडजिव्हिका ईशब्दवु गुडजिव्हाशब्ददद- दर्शिद् धात्वर्थे-उन् वक्तव्यः ईवार्तिकदिंद उन् प्रत्ययआगि ' युवो- रनाकौ ' ई सूत्रदिंद उकारस्थानदल्लि अक आदेशआगि ' अजा- द्यतष्टाप् ' ईसूत्रदिंद टाप् प्रत्ययआगि सिद्धवागिरुत्तदे. ) धात्व- र्थे उन् वक्तव्यइति उन्यकादेशे टापि सति रूपं । बालस्य कटुवा- द्यौषधदानाय मुखं व्यादातुं गुडे जिव्हायां दत्ते तात्कालिकसंतो- षो बालस्य यथा जायते । तथा तर्कप्राबल्यवादिनः किंचित्सं- तोषाय पराजित इत्युक्तमित्यर्थः । कुतएवं मुख्यपराजयएवास्त्विव- त्यतआह ॥ पराजितत्वंहीति । तद्विषयाभ्युपगमः । तर्कविषया- नन्नत्वाभ्युपगमः । सोप्यस्त्वित्यतआह । सतिच तास्मिन्निति । अनन्नत्वाभ्युपगमेसति नहि नान्नमत्ती।ति मूलकृदुक्तं विपर्यये पर्य- वसानं नस्यादित्याह ॥ नहिनात्तीति ॥ नस्यादिति । नास्त्येवे- तिस्यादित्यर्थः॥ तादिति । अन्नं । अतिप्रसंगांतरेति । क्षुन्निवृत्तितज्ज- न्यदुःखाभावसुखानुभवमुखप्रसादादिनस्यादित्यातिप्रसंगांतरेत्यर्थः ।

श्री श्री. ती. टि.—इष्टेति । इष्टस्य ब्रह्माखंडत्वसत्यत्वादेरवि- घातित्वं अनुकूलत्वमित्यर्थः ॥ दत्तमुत्तरमिति । सर्ववैलक्षण्यांगी- कारादित्यादिना ग्रंथेनोक्तमुत्तरमित्यर्थः । अन्ने यावनालान्ने । ननु युक्तेर्दौर्बल्ये कथं तत्पराजितत्वोक्तिरित्यतआह ॥ अत्रेति ॥ गु- डेति । औषधदाता भिषक् आदौ जिव्हायां गुडं स्थापयति सोयं गुडजिव्हिकान्यायस्तद्वदित्यर्थः ॥ तद्विषयेति । तर्कवि- षयानन्नत्वाभ्युपगम इत्यर्थः ॥ सतिचेति । अनन्नत्वेऽगीकृते सतीत्यर्थः ॥ नहीति ॥ अन्नं नात्तीतिनहिअत्तीतियावत् । न स्यात् तथाच नाद्यादित्यर्थः । अनन्ने कार्पासबीजादौ ॥

टीकेय अर्थ-पूर्वपक्षकारनु शंकिसुत्ताने जगतितनदेयेंदिद ब्रह्मनु भिन्नानिद्दाने एंदरे ब्रह्मगे वैशिष्ट्यप्राप्तवायितु शुद्धब्रह्मएंब मातु होयितु. अभिन्नत्वहेळिदरे ब्रह्मगे मिथ्यात्वबंतु.याकंदरे जगन्मिथ्याइरुवदरिंद ब्रह्मगादरू मिथ्यात्वप्राप्त- वायितु ईप्रकार नीवु पूर्वदल्लि भिन्नत्वे वैशिष्ट्यापत्तिः। अभिन्नत्वे मिथ्यात्वं एंब

वाक्यगळिंद "अभिन्नंचेन्मिथ्यारूपेण जगता ब्रह्मापि मिथ्यैवस्यात्" एंब मूलवाक्यव्याख्यानावसरदल्लि हेळिद्दारे आदरे भिन्नत्वपक्षदल्लि दोषबरुवदिल्ल एंत ननु एंब वाक्यदिंद शंकिसुत्तानेः–( ईमातिगे आधार श्री रा. तीर्थरु–भिन्नत्वपक्षे दोषोनेति शंकते नन्विति ) जगत्तु मिथ्या इरुत्तदे तत्प्रतियोगिकभेदादिविशिष्टआदरू मिथ्याइरुत्तदे आदकारण "भिन्नंचेद्भेदादिविशिष्टाच्छुद्धं भिन्नमभिन्नवेत्याद्यनवस्था" एंब मूलवाक्यदिंद ब्रह्मगे शुद्धत्वहानि ह्यागे आगुत्तदे? आगुवदिल्लवेंब भाव (ईमातिगे आधार मत्त विशेषस्पष्टीकरण श्री श्री तीर्थरु–भिन्नमित्यनेनेति। भिन्नंचेदिति वाक्येनेत्यर्थः। भिन्नंचेदित्यत्रतदितिविशेष्यं पूरितं। तथाच ब्रह्मणो जगत्प्रतियोगिकभेदविशिष्टत्वे शुद्धत्वहानिर्वक्तुं न शक्यते भेदवैशिष्ट्यस्य सत्यत्वे खलु सा स्यात् नचैवं तस्यारोपितत्वेन मिथ्यात्वात् नह्यारोपितेन नीलिम्ना गगनस्य नीरूपत्वमपैतीति भावः) ईप्रकार पूर्वपक्ष सुदृढवागलु सिद्धांतकाररु अनुत्तारे–नीनु ब्रह्मगे शुद्धत्वहानिआगुवदिल्लवेंत अनबेड, याकंदरे परस्पराश्रयदोषबरुत्तदे. स्पष्टीकरण—विशिष्टवादंथ वियदादिरूपजगत्तिगे मिथ्यात्वसिद्धिइद्दरे ब्रह्मगे शुद्धत्व सिद्धियागुवदु, शुद्धत्वसिद्धियागलु इदर निर्वाहार्थवागि विशिष्टादिगे मिथ्यात्वसिद्धियागुवदु ईप्रकार परस्पराश्रय. (ईमातु श्री रा. तीर्थर टिप्पणिभोळिंद बरदद्दे,) परस्पराश्रयदोषयावकारणद्देसेयिंद बरुत्तदे एंदरे विशिष्टरूपवादंथ वियदादिजगत्तिगे मिथ्यात्वसिद्धिमाडुवदरगोस्कर अद्यापि प्रयत्नमाडिसिरुत्ती ( जगन्मिथ्यात्वसिद्धमाडुवदु इन्नु निन्निंद आगिल्लवेंब भाव ) इन्नमेले तदनेन एंब टीकावाक्यद अर्थ–तत् अंदरे तस्मात् अंगपंचकवैकल्यबरुवदरिंद ( अनुमानअंगगळु ५–प्रतिज्ञा–हेतु–उदाहरण–उपनय–निगमन ) अनेन अंदरे जगतोभिन्नं इत्यादिमूलवाक्यदिंद विशिष्टादिनिराकरणतर्कक्के प्रतितर्कपराहतियन्नु प्रतिपादनमाडुवदरिंद ( मूलकाररिंद ) व्याप्तिवैकल्यवादरू तोरिसिदंते आयितु. ह्यागंदरे अनिर्वचनीयनादंथ ब्रह्मनल्यादरु तर्कक्के संचारहेळुत्तदे ( स्पष्टीकरण–आरंभदल्लि मूलकाररु विशिष्टादिगे सत्यत्ववन्नु याव वाक्यदिंद सिद्धमाडिदरु, नंतर पूर्वपक्षकारनु विशिष्टादिनिराकरणतर्कयावदु माडिदनु, नंतर सिद्धातकाररु प्रतितर्कदिंद पराहतिह्यागे माडिदरु, व्याप्ति वैकल्यह्यागे बंतु, ब्रह्मनल्यादरु तर्कक्के संचार ईमातिन अर्थवेनु, इवेल्लदरबग्गे स्पष्टीकरणमाडुत्तेन, हागु पूर्वदल्लि आदग्रंथवन्नु बालकर स्मरणियल्लि तंदुकोडुत्तेने मूलकाररु

" अंगीक्रियमाणत्वाद्विशिष्टादेरनिर्वचनीयाभावाच्च सत्यत्वंच सिद्धं " एंब वाक्यदिंद विशिष्टादिगे सत्यत्वसिद्धमाडिदरु.

—विशिष्टादिनिराकरणतर्क—

यदि विशिष्टादिकं तत्वं स्यात् तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात्तथात्वेचानवस्थादिकं स्यात् नचानवस्थादिदोषदुष्टं भिन्नत्वाद्यन्यतमप्रकारोपेतत्वमंगीकर्तुं शक्यमतो न तत्वं किंतु अनिर्वचनीयं.

—प्रतितर्क—

यदि भेदादिविकल्पानुपपत्त्या विशिष्टादिकमनिर्वचनीयं स्यात् तदा ब्रह्मापि तथा प्रसज्यत भेदादिविकल्पानुपपत्तेस्तत्रापि साम्यात् विपर्ययेपर्यवसानमाह । " यद्येवमपि नानिर्वचनीयत्वं ब्रह्मणस्तर्हि जगतोपि न स्यात् "

ब्रह्मगे सत्यत्वबरलिल्ल अनिर्वचनीयत्व बंतु साध्यबरलिल्ल कारण व्याप्तिवैकल्यवेंत अर्थ. ( आधार श्री. रा. ती. अननिर्वचनीयेणेति । साध्याभावोपपादनायैतदुक्तिः ॥ )

अर्थ- ब्रह्मनल्यादरू तर्कक्के संचारबरुत्तदे एंब मातिन अर्थ—शुद्धब्रह्मनु भेदादिविशिष्टब्रह्मनदसेयिंद भिन्ननो अभिन्ननो ईप्रकार विकल्पमाडि भिन्नंचेत्तदपि भेदादिविशिष्टं मिथ्यास्यादिति प्रातिपत्तव्याभावः अथ पुनः शुद्धं प्रतिपत्तव्यमिति ब्रूयात्तदा पूर्ववदनवस्थास्यात् ईप्रकार ब्रह्मनल्यादरू तर्कहेळलिक्क बरुत्तदे एंत अर्थ. ( आधार श्री रा. ती. विकल्पपूर्वमुक्तानवस्थादिरूपतर्कस्येतिवा भिन्नत्वादिविकल्पासहत्वरूपतर्कस्येतिवार्थः ) अखंडब्रह्मने तत्ववेंब अर्थक्के उपपत्तियागुवदरगोस्कर ईतर्कवु परनिंद हेळल्पट्टितु. तस्य अंदरे आ तर्कक्के ब्रह्मनल्यादरू प्रवेशत्व इरुवदरिंद (ब्रह्मनल्यादरू ईतर्कहेळलिक्के बरुत्तदे एंत अर्थ. ) इष्टाविघातित्वाख्यतर्कांगवैकल्यवादरू हेळिदंतेयायितु ( इदु ज्ञांतस्यज्ञोतैवार्थः एंबते आगुत्तदे कारण स्पष्टीकरण—परन इष्टतर्क यावदु अदक्के अंगगळ वैकल्यह्यागे बंदवु इदन्नु स्पष्टमाडि तोरिसुत्तेने—परन इष्टतर्क—यदि विशिष्टादिकं तत्वं स्यात् तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात्तथात्वेचानवस्थादिकं स्यात् नचानवस्थादिदोषदुष्टं भिन्नत्वाद्यन्यतमप्रकारोपेतत्वमंगीकर्तुं शक्यमतो न तत्वं किंतु अनिर्वचनीयं इदक्के नावु प्रतितर्कहेळिदेनंदर यदि भेदादिविकल्पानुपपत्याविशिष्टादिकं अनिर्वचनीयं स्यात् तदा ब्रह्मापि तथा प्रसज्यत भेदादिविकल्पानुपपत्तेस्तत्रापि साम्यात्, ईप्रकार नावु प्रतितर्क हेळुवदरिंद व्याप्तिवैकल्य बंतु. ई मातु

टीकादल्ले तदनेन एंब मेलिन वाक्यदल्लेवे हेळिरुत्तदे, मत्तु अंगीक्रियमाणत्वा-द्विशिष्टादेरनिर्वचनीयाभावाच्च सत्यत्वंच सिद्धं,एंब मूलवाक्यव्याख्यान अव-सरदल्लि टीकारायरु हेळिद्दनंदरे अंगीक्रियमाणेपि विशिष्टाकारो न तावदन्नेव। तथा सत्युपलक्षणत्वानुपपत्तेः । नचनीलं नभइतिवदुपपत्तिः । तत्रापि प्रतिपत्तेरुपलक्षणत्वात् । नचानिर्वचनीयः । तत्र प्रमाणाभावात् । विशिष्टा-कारादिरनिर्वाच्यो विशिष्टाकारादित्वात् । नीलंनभइतिवादितिचेन्न । तत्रा-निर्वचनीयाभावेनाप्रसिद्धविशेषणत्वात् । तदेवमसत्वानिर्वचनीयत्वाभावेन विशिष्टादेः सत्यत्वंच सिद्धमितिअनुपत्यभावाद्विशिष्टएव सत्यज्ञानादिवा-वयार्थः । ईप्रकार व्याप्त्यादिवैकल्यगळु बंदवु एंत तिळियतक्कद्दु.

इन्नमेले इष्टापादनरूपता एंब वाक्यद अर्थ—इष्टापादनरूपता ( सि-द्धांतिगळिगे ह्यागे इष्टापादनता आगबेको अदरंते ) ह्यागे संभाविसबेको ह्यागे ऊहनमाडतक्कद्दु. ( ऊहनगळु श्री वे. तीर्थरटिप्पणियल्लि बहळसुलभ-रीतियिंद बरदिद्दरे कारण ग्रंथगौरवभयद्देसेयिंद इल्लि हेळुवदिल्ल ) ईप्रकार अंगपंचक वैकल्यबरुवदरिंद इदु तर्काभासइरुत्तदे एंब मातु सिद्धवायितु. तर्कवु प्रमाणदृष्टार्थवन्नु बाधिसलिक्के शक्यवागुवदिल्ल एंब मातु एल्लि इरुत्तदे एंत केळुववनिगे प्रतिवादियिंद (सिद्धांतकाररिंद ) सर्ववैलक्षण्यांगी-काराद्धुर्घटमपि ब्रह्म प्रमाणादंगीक्रियतएव एंब वाक्यदिंद ( मूलवाक्यदिंद) उत्तरकोडल्पट्टितु ( ईमातु श्रीनिवासतीर्थीय मेलिंद बरध्दे ) इदक्केवे श्रीराघवेंद्रतीर्थरु बरयुत्तार एनंदरे, अंगपंचकवैकल्य बरुवदरिंद ( अंगपं-कयाववु इवेंदू ह्यागे बरलिल्ल ) इदु तर्काभस इरुत्तदे एंत सिद्धांतिगळिंद उत्तरकोडल्पट्टितु. पूर्वपक्षकारनु प्रतिभटनागि केळुवदु बिट्टु सुल्हत भाव-दिंद केळलु सर्वज्ञरु हेळुत्तारे-" प्रत्यक्षप्रमाणदकिंतलु बलवत्तर प्रमाणयावद इल्ल. " बाधहेळबेकादरे बलवत्तरप्रमाणदिंद हेळतक्कद्दु. विरोधमात्रदिंद बाधकत्वहेळिदरे वैपरीत्यवादरू संभविसुवदु. विशिष्टादिजगद्विषयप्रत्यक्षादिज्ञानद्देसेयिंद तर्कक्के प्राबल्यविल्ल. तर्कक्के प्राब-ल्यविद्दरे असौ अंदरे तर्कवु तद्बाधकः अंदरे विशिष्टादिबाधकवादीतु प्रत्यक्षद्देसेयिंद तर्कवु याक बलिष्टविल्ल एंदरे सर्वज्ञरु हेळुत्तारे-' युक्ति-यिंद ( तर्कदिंद ) पराजितनादाग्यादरू ' ( अनन्नत्वदिंद प्रतिभातनादाग्या-दरु ) क्षुधितः ( हसदंथवनु ) नान्नमत्ति इति न (अन्नवन्नु भोजनमाडुवदिल्ल हीगेनुअल्ल.) भोजनमाडे माडुत्ताने एंत अर्थ.

( स्पष्टीकरण टीकादल्लि बरुत्तदे. )

यावकालक्के देशविशेष ( जोळबेळियुवनाडु एंत ओंदु घळिगितिळि ) दल्लि इद्दंथ पुरुषनिंद यावनाल अन्न ( बिळेजोळदनुच्चु ) वन्नु नोडलागि देशांतर ( भत्त बेळेयुव प्रदेश—मल्लाड अक्कीदेश ) दल्लिइद्द मत्तोब्बपुरुषनु स्वानुभूतान्नरसादिकगळन्नु तत्र अंदरे आ जोळदनुच्चिनल्लि काणदेइरुववनंथवनागि तर्किसुत्ताने एनंदरे—इदु अक्की ( तंडुल ) अन्नवागिद्दरे तनगे मन्यमान ( अनुभवइद्दंथ ) रसादिगळु इदरल्लि इरुत्तिद्दवु इदरल्लि. अवु इल्लवेंद बळिक इद अन्नअल्ल ईप्रकारवागि यावाग्ये तर्कमाडुत्ताने आवाग्ये ह्यागे तर्कवु प्रत्यक्षद्देसेयिंद बलवान् आयितु ( प्रत्यक्षवु बलवान् आगलिल्ल तर्कवे बलवान् आयितु एंत परन हृदय ) इदक्के सिद्धांतकाररु उत्तरकोडुत्तारे. तर्कवु प्रत्यक्षद्देसेयिंद बलवान् इद्दपक्षदल्लि ई तर्कादरू ( यदीदमन्नंस्यात्तदा प्रतिपन्नरसाद्युपपन्नं स्यात् ) बलिष्ट इरुवदरिंद अन्नदृष्टियन्नु ( अन्नवन्नु प्रत्यक्षदिंद कंडद्दु ) बाधिसलि. तात्पर्य—प्रत्यक्षीकरिसिद अन्न तर्कदिंद अनन्नत्व प्रतिभातनादवनु प्रत्यक्षवन्नु अनादरमाडि, नाद्यात् इति न भोजनवेमाडदे बिट्टानु हीगे आगलिक्किल्ल. भोजनमाडेमाडुत्ताने एंब भाव. इदरिंद एनु ज्ञातवायितु एंदरे प्रत्यक्षद कितलु तर्कवु बलवान् अल्ल. ई टीकावाक्यद अर्थ कथारूपदिंद स्पष्टमाडुत्तेने—जोळददेशद निवासियाद ओब्ब पुरुषनु जोळद अन्न ( बिळेजोळदनुच्चु ) माडिइट्टद्दु प्रत्यक्ष नोडिदनु. आस्थळक्के अक्कीदेशद पुरुषनु बंदु अन्नुत्ताने—इदु अन्न अल्ल; अन्नवागिद्दरे ननगे अनुभोग इद्द अन्नद स्वाद इदरल्लि इरुत्तित्तु आदकारण इदु अन्न अल्ल. ईप्रकार तर्कमाडलु इदन्नु जोळददेशद पुरुषनु केळि यद्यपि तर्कदिंद अनन्नत्वदिंद प्रतिपन्ननादरू ( अन्न अल्ल एंत ज्ञातनादरु ) तानु प्रत्यक्षनोडिद अन्नवन्नु हसवि तनगे इद्दाग्यादरू अनादरणमाडि उण्णदे बिट्टानु हीगे एंदिगू आगलिक्किल्ल.

अत्र युक्तिपराजितएंब टीकावाक्यद अर्थ—पूर्वपक्षकारनु शंकिसुत्ताने—युक्तिगे दौर्बल्यइद्दबळिक युक्तिपराजितत्वएंब मातु ह्याग कूडुत्तदे एंत शंकिसिदरे अत्र एंब वाक्यदिंद समाधानमाडुत्तारे. युक्तिपराजितएंब मातु गुडजिह्विकान्यायदंते कूडुत्तदे ( स्पष्टीकरण—बालकनिगे आरोग्यदसल्लुवागि औषधकोडुवकालक्के अवनु मुखतेरेयबेकु एंबनगे अवन नालिगियमेले बेल्लदकरणियन्नु इडलु अवनु यावप्रकारसंतोषविशिष्टनागुत्तानो अदरंते

तर्कप्राबल्यवादिगे किंचित्संतोषवागबेकु (एंबुवदरगोस्कर पराजितएंब शब्द-प्रयोगमाडिद्दारे एंत अर्थ ) पराजितने आदनु हीगेनु अल्ल. पराजितत्वअंदरे तद्विषयाभ्युपगमएंत अर्थ (स्पष्टीकरण—तद्विषयअंदरे तर्कक्के विषयीभूत-वादंथ अनन्नत्व अंगीकार. अनन्नत्व अंदरे कार्पासबीज. तर्कदिंद कार्पसबी-ज ( हत्तिकाळगळादरु अन्नदंते बेळ्ळगे काणिसुत्तवे ) वेंत ओंदु क्षणसि-द्धवादरू क्षुधितनु यावनाळअन्नवे इरुत्तदे एंत प्रत्यक्षनोडिद्दरिंद अदन्नु तिन्नदे बिडलारनु एंत अर्थ. ) उपादीयमानंच तत् स्वीकरिसलिक्के योग्य-वादंथ आ अन्नवु क्षुन्निवृत्याद्य र्थक्रियाक्षमंच न स्यात् क्षुधाशांतिमाडुवदर-गोस्कर क्रियासामर्थ्यउळ्ळंथाद्दु इरलारदु इत्यतिप्रसंगांतरसूचनाय क्षुधित इत्युक्तं एंबुवंथ अतिप्रसंगवन्नु सूचनमाडुवदरगोस्कर क्षुधितशब्द प्रयोगि-सल्पट्टदे ( अतिप्रसंगअंदरे इल्ले यावदु इदरस्पष्टीकरण—आ अन्नवन्नु भोजनमाडुवदरिंद क्षुधाशांतियागि तज्जन्य अंदरे क्षुधानिवृत्तियिंद हुट्टिदंथ दुःखाभाव, सुखानुभव मत्तु मुखप्रसादादि आगलारदु एंबुवंथ अतिप्रसंग-वेंतर्थ ( मुखप्रसादादि आगलारदु एंबुवंथ अतिप्रसंगसूचनमाडुवदरगोस्कर क्षुधितशब्दइट्टिद्दारे इष्टु लक्षदल्लि इडतक्कद्दु. )

टीका—ननु यदा वस्तुतोऽनन्नेप्रत्यक्षेणान्नबुद्धि-र्जायते। तदास्त्येवोक्ततर्केण बाधः परित्यागदर्शना-त्। तत्कथमेतदित्यतआह ॥

मूल—बलवद्दृष्ट्य बाधे।

टीका—पूर्वेणान्वयः। यदा परित्यागः तदा बलवदनन्नत्वदृष्ट्यान्नत्वदृष्टेर्बाधे सत्येव। नतु केवल-तर्केण। अन्यथाऽन्यत्रापि तत्प्रसंगादिति। ननुप्र-त्यक्षेण दृष्टमन्नं तर्केण बाध्यतएवातो नायं प्रसंगः। ननूक्तं तर्हि नाद्यादिति। मैवं। बाधितेप्यर्थे रागा-तिरेकेण प्रवृत्तिसंभवादित्यतआह॥

मूल—नचान्नत्वे दुर्घटे तस्यानन्नत्वं भवति।

टीका–यद्यन्नत्वं तस्य बाधिनंस्यात्तदा परमार्थतोनन्नत्वं स्यात् । रजतत्वे बाधिते सत्यरजतत्वपारमार्थ्यवत् । नत्वेवं तथासति नाद्यादित्युक्तं । नहि रजते रागातिरेकवानापि निवृत्ते भ्रमे पुनस्तत्र प्रवर्तते । यदि पुनरुत्पन्नेपि बाधे रागातिरेकात् भ्रमसंस्कारात् प्रवृत्तिरित्यभिप्रायः । तथाप्यर्थक्रिया न स्यादिति । ननूक्तमेवैतत्क्षुधितइति । सत्यं । तस्यैव प्रपंचोयमित्यदोषः । यदानन्नमन्नत्वेन मन्यते तदा तर्कबाधितं भवत्येवानन्नमित्यतआह ॥

मूल–दृष्टबाधितदृष्टस्य ॥

टीका–पूर्वेणैव संबंधः । तात्पर्यं पूर्ववत् । ननु यस्यतर्केणान्नत्वं बाध्यते तदनन्नं भवत्येव । नचैवमभ्यवहाराद्यभावापातः । अनन्नवैलक्षण्येन तदुपपत्तेः । नहि तर्केण पदार्थानां स्वरूपासत्वमुच्यते । किंतर्हि प्रतिपन्नस्वभावानुपमर्देन तदनिर्वाच्यमेवेतिचेन्न । तथासति नेदं रजतमिति बाधकानंतरं शुक्तिकानुभववदन्नानन्नवैलक्षण्यानुभवप्रसंगः । नचासावस्तीत्याह ॥

मूल–नचान्नानन्नवैलक्षण्यमनुभूयते ॥

टीका–कुतो युक्त्यनुसंधालुरेवंविधानुभवाभावोवगम्यतइति चेत् ॥ तत्कार्यव्यवहाराभावादित्याह ॥

मूल–नचतथाव्यवहारः ॥

श्री वे. ती. टि.–अन्यथेति । केवलतर्केण बाधेअन्नेऽन्नत्वदृष्टावपि

तर्कबाधप्रसंगादित्यर्थः । नचानन्तत्वइत्यादिमूलोक्तविपर्ययपर्यवसान-लब्धमुक्तशंकानिवर्तकं तर्कं दर्शयति ॥ यद्यन्नत्वमित्यादिना ॥ नत्वेवमिति । तस्यानन्नत्वं नहीत्यर्थः । ननु मूलं विपर्ययपर्यवसान-परंचेत्तस्यानन्नत्वं न च भवतीत्येव वक्तव्यं व्यर्थमाधिकमितिचेत् । मैवं । यद्यन्नत्वं तस्य बाधितं स्यादित्यापादकसूचकत्वेन सार्थक-त्वात् । नहीति । प्रवर्तकज्ञानाभावादितिभावः । ननु भ्रमाभावेपि तज्जनितसंस्कारात्प्रवृत्तिरुपपन्नेतिशंकते ॥ यदीति ॥ रागातिरेका-दिति । उत्कटरागसहितादित्यर्थः ॥ प्रपंचइति । यद्यपि क्षुधितप-देनैतच्छंकासमाधाने सूचिते तथापि शब्दतोन प्रपंचिते इतिभावः।

श्री रा. ती. टि.—प्रत्यक्षाभासे तर्कबाधो दृष्टइत्याशंकते ॥ नन्विति ॥ पूर्वेणेति । बलवदृष्ट्या बाधाभावेसति दृष्टान्नेतरतर्के-णानन्नत्वज्ञानेसत्यपि नान्नमत्तीति नहीति योजनेतिभावः । परो-क्तस्थलेपि बलवद्विपरीतदृष्टिबाधो न तर्केणेतिभावेनाह ॥ यदेति । दृष्टस्य परित्यागइत्यर्थः ॥ अन्यत्रापीति । बलवदृष्टचबाधस्थले-पीत्यर्थः ॥ अर्थक्रिया न स्यादिति । क्षुन्निवृत्त्यादिप्रागुक्तार्थक्रिया न स्यादित्यर्थः । पूर्ववाक्ये क्षुदितिपदेन क्षुन्निवृत्त्याद्यर्थक्रियाभाव-रूपातिप्रसंगांतरसूचनस्योक्तत्वान्नचान्नत्वे दुर्घटइत्याद्युक्तिः पुनरुक्ते-त्याशंक्य निराह ॥ ननूक्तमेतादिति । अर्थक्रियाभावरूपातिप्रसंगां-तरमित्यर्थः । भ्रमस्थलेऽक्षसिद्धतर्कबाधितमस्तीतिशंकानिरासकत्वेन मूलमवतारयति ॥ यदेति । पूर्वेणेति । दृष्टचबाधितदृष्टस्यान्नत्वे तर्केण दुर्घटेपि तस्यानन्नत्वं नच भवतीति योजनेति भावः ॥ तात्पर्य पूर्ववदिति । अन्नत्वेन दृष्टं यदानन्नं भवति तदा बलवदनन्नत्वदृ-ष्टचान्नत्वदृष्टेर्बाधेसत्येव नतु केवलतर्केण । अन्यथा दृष्टचबाधित-दृष्टान्नस्थलेप्यनन्नत्वप्रसंगादित्येवं बलवदृष्टचबाधइति वाक्यतात्प-र्यमिव तात्पर्यं ज्ञेयमित्यर्थः । दृष्टचबाधितदृष्टस्यापि तर्केणास्ति-बाधइति शंकते ॥ ननु यस्येति । दृष्टचबाधितदृष्टस्यापि यस्ये-

त्यर्थः ॥ प्रतिपन्नेति । प्रमितवस्तुस्वभावेत्यर्थः ॥ अनिर्वाच्यत्वमेवेति । उच्यतइत्यनुषंगः । मूलार्थमनुवादेन विवृण्वन्नेवोत्तरवाक्यमवतारयति । कुतइत्यादिना ॥ एवंविधेति । अन्नानन्नविलक्षणमिदमित्येवंरूपेत्यर्थः ।

श्री श्री. ती. टि.—यदेति । यदातु अनन्ने अन्नत्वप्रत्यक्षस्य तर्कबाधेसति परित्यागस्तदा तन्मूलभूतबलवत्प्रत्यक्षबाधेसत्येव न केवलतर्कबाधेनेत्याशयः ॥ अन्यथेति । केवलतर्केणचेत्परित्यागइत्यर्थः ॥ अन्यत्रापीति । वस्तुतोन्नेपि यदीदमन्नं स्यात्तदा परिचितरसाद्युपेतंस्यान्नचेदं तथा तस्मान्नेदमन्नमितितर्कबाधेन परित्यागप्रसंगादित्यर्थः। दृष्टमन्नं वास्तवान्नं । रागातिरेकेण रागौत्कट्येन ॥ यद्यन्नत्वमिति । प्रत्यक्षदृष्टस्य तस्य वस्तुतोऽन्नस्य अन्नत्वं यदि उक्ततर्केण बाधितं स्यादित्यर्थः ॥ तथासतीति । परमार्थतोऽनन्नत्वेसतीत्यर्थः ॥ भ्रमेति । वस्तुतोनन्नेन्नत्वभ्रमसंस्कारादित्यर्थः । अर्थक्रियाक्षुन्निवृत्तिरूपा । अन्नं वस्तुतोन्नं । तर्केति । यदीदमन्नंस्यादितितर्केत्यर्थः । अनन्नत्वं अनन्नत्वप्रत्यक्षं ॥ पूर्वेणैव संबंधइति । बलवद्दृष्टचबाधितदृष्टस्य अन्नत्वे दुर्घटइत्यादिना संबंधइत्यर्थः ॥ तात्पर्यमिति । दृष्टचबाधितदृष्टस्य वस्तुतोन्नस्य यदीदमन्नं स्यादित्युक्ततर्केणान्नत्वे दुर्घटे तस्यानन्नत्वं नहि भवति अन्नमेव भवति दृष्टिबाधितदृष्टस्यत्वनन्नत्वमेव भवतीति यावदिति पूर्ववत्तात्पर्यं द्रष्टव्यमित्यर्थः । यस्यवास्तवान्नस्य । ननु तर्केणान्नस्यासत्त्वप्रतिपादनात्कथमभ्यवहारप्रसंगइत्यतआह ॥ नहीति ॥ प्रतिपन्नेति । असद्विलक्षणस्वरूपानुपमर्देनेत्यर्थः । तथानुभवः । अन्नानन्नविलक्षणत्वानुभवः । युक्त्यनुसंधातुः यदीदमन्नं स्यादितियुक्त्यनुसंधानवतः । अनवतार्यत्वात् अनुभवकलहापत्त्याऽवक्तव्यत्वादित्यर्थः ।

टीकेय अर्थ—परनु शंकिसुत्ताने—प्रत्यक्षाभासदल्लि तर्कबाधवु दृष्टवा-

गिरुत्तदे आगंदरे यावागे वास्तवीकरीतियिंद अन्नदल्लि ( कार्पासबीजगळल्लि ) प्रत्यक्षदिंद अन्नत्वेन बुद्धियु हुट्टुतदेयो आगंग तर्कदिंद बाधइद्देइरुत्तदे याकंदरे प्रत्यक्ष नोडिद पुरुषनु अंथ अन्नवन्नु परित्यागवे माडुत्ताने. हीगिरलु दृष्टांगे बलवत्वद्यागे वतु एंब शंकेयिद्दरे मूलकाररु बलवद्दृष्टयबाधे एंब वाक्यदिंद उत्तरकोडुतारे. ई मूलवाक्यक्के पूर्ववाक्यदिंद अन्वयिसबेकु आगंदरे “ बलवद्दृष्टयबाधेनाति कवलं युक्तिराजितोपि नान्नमत्तीतिनहि ”। अर्थ–बलवद्दृष्टियिंद अबाधितआगतिरलिक्कागि युक्तिराजितनादाग्यादरू अन्नवन्नु भोजनमाडुवदिल्ल हीगेनु अल्ल अन्नभोजन माडेमाडुत्ताने एंत अर्थ. यावाग परनु पूर्वदल्लि हेळिदंते प्रत्यक्षाभासदल्लि अंदरे अनन्नदल्लि अन्नत्वप्रत्यक्षक्के तर्कदिंद बाधआगतिरलिक्कागि परित्यागमाडुत्तानो आकालदल्लि परित्यागक्के मूलभूतवादंथ बलवत्प्रत्यक्षदिंद बाधआगतिरलिक्कागिये परित्यागवेंत तिळियतक्कद्दु होतु केवल तर्कदिंद बाधवल्लवेंत अर्थ ( यदापरित्यागवेंत टीकादल्लिद्द एरडुशब्दगळमध्यदल्लि दृष्टस्य एंब शब्दवु श्री रा. ती. टिप्पणिप्रकार सेरिसबेकु अथवा श्री श्री. ती. टिप्पणिप्रकार अनन्ने अन्नत्वप्रत्यक्षस्य तर्कबाधेसति इष्टुसेरिसबेकु. हीगे माडिदरे वाक्यार्थ माडलिक्के अन्वयचेन्नागि कूडुतदे ) अन्यथा अंदरे केवलतर्कदिंदले बाधवेंदपक्षदल्लि सत्यभूतवादंथ अन्नविषयदल्लि “ यदीदमन्नं स्यात्तदा परिचितरसाद्युपेतं स्यान्नचेदं तथा तस्मान्नेदमन्नं ” ई प्रकार तर्कमाडि अन्नपरित्यागमाडुव प्रसंग बरुत्तदे. परनु पुनः शंकिसुत्ताने. प्रत्यक्षदिंद नोडिद अन्नवु तर्कदिंद बाधितआगे आगुतदे आदकारण इदु नीवु हेळिदंथ प्रसंगवल्ल. पुनः अवनु नम्म अभिप्रायवन्नु ताने शंकिसिकोंडु उत्तर हेळुत्ताने–“ततश्च दृष्टान्नोपि तर्केणानन्नत्वं प्रतिपन्नो दृष्टिमनादृत्य नाद्यात् इति न” एंत पूर्वदल्लि उक्तवागिरुत्तदल्ल एंब नीवु अंदरे अनकूडदु याकंदरे बाधितार्थदल्यादरु (बाधितअन्नदल्यादरु) रागोत्कटयदिंद प्रवृत्तिकूडुत्तदे (रागातिशयदिंद बाधितअन्नवन्नु भक्षण माडुत्तान एंत अर्थ) एंत पूर्वपक्षवरलु पूर्णप्रज्ञरू हेळुत्तारे–अन्नत्वे दुर्घटे, अन्नत्वतर्कदिंद दुर्घटवादाग्यादरू अंदरे बाधितवादाग्यादरू तस्य, आ अन्नत्वक्के अनन्नत्वं न भवति. अनन्नत्ववु आगलारदु तात्पर्य यावनालान्नदिंद क्षुधानिवृत्तिरूपअर्थक्रियाआगेआगुत्तदे एंब भाव. यदन्नत्वं तस्य बाधितं स्यात् अंदरे प्रत्यक्षदृष्टवाद सत्यभूतअन्नक्के अन्नत्ववु उक्ततर्कदिंद बाधितवादपक्षदल्लि परमा-

थरीतियिंद अद्दक्के अनन्नत्वप्राप्तवादीतु ह्यागंदरे रजतत्ववु बाधितवागलागि अरजतत्वक्के ह्यागे पारमार्थ्यबरुत्तदो अ?ंगे नत्वेवं अंदरे सत्यभूतअन्नक्के अनन्नत्व इल्ल तथापि अंदरे परमार्थरीतियिंद अनन्नत्व विद्दपक्षदल्लि ततश्च दृष्टान्तेपि तर्केणानन्नत्वं प्रतिपन्नो दृष्टिमनादृत्य नाद्यात् एंत उत्तर हेळिरुत्तदे. रागौत्कठ्यदिंद विशिष्टनाद पुरुषनु (रजतप्राप्तिविषयदल्लि अत्यंत उत्कंठाउळ्ळपुरुषनु) रजतभ्रमनिवृत्तियादकूडले पुनः अदु रजतवेंदु तिळदु अदन्नु ग्रहणमाडलिक्क प्रवृत्तनागुवदिल्ल भ्रमनिवृत्तियादाग्यादरू तज्जनित-संस्कारदिंद (भ्रमजनितसंस्कारदिंद) प्रवृत्तिकूडुत्तदे एंत शंकिसिदरे तथापि एंब वाक्यदिंद टीकारायरु परिहारमाडुत्तारे—यदि अंदरे यावपक्षद-ल्लि पुनः बाधउत्पन्नवादरे रागौत्कठ्यदिंदागली अथवा भ्रमसंस्कारदिंदागली (वस्तुतोनन्नेन्नत्वभ्रमसंस्कारात् एंत श्रीनिवासतीर्थीय) प्रवृत्तियागिरुत्तदे एंत तिळियतक्कद्दु तथापि अंदरे प्रवृत्तियादाग्यादरू अर्थक्रिया नस्यात् अंदरे क्षुन्निवृत्तिमुखप्रसादादिप्रागुक्तअर्थक्रिया आगलारदु एंत अर्थ. ननूक्त-मेव एंब टीकावाक्यक्के श्री रा. तीर्थरटिप्पणिप्रकार अवतरणिका—पूर्ववा-क्यदल्लि क्षुधितएंब पददिंद क्षुन्निवृत्त्याद्यर्थक्रियाभावरूपआतिप्रसंगांतरसूच-नामाडिरुत्तदे अदबळिक्क नचान्नत्वे दुर्घटे एंब मूलवाक्योक्तियु पुनरुक्ति-यादंतेयायितु एंत शंकिसिकोंडु निराकरणमाडुत्तारे ननूक्तमित्यादिवाक्य-दिंद—ईमातु (अर्थक्रियानस्यात् एंब मातु) क्षुधितपददिंद पूर्वदल्लि उक्त-वागिरुत्तदे एंदरे सत्य एंत अर्धांगीकारमाडिकोंडु उत्तरहेळुत्तारे-अदरदे इदु विस्तार इरुत्तदे आदकारण पुनरुक्तिदोषबरुवदिल्ल (विस्तार अंदरे ह्यागे ईबगे श्रीवेदेशतीर्थरु बरेयुत्तारे "यद्यपि क्षुधितपदेनैतच्छंकासमाधाने सूचिते तथापि शब्दतो न प्रपंचिते इति भावः) भ्रमस्थलदल्लि अक्षसिद्ध-तर्कबाधितत्वइरुत्तदे एंत शंकिसिकोंडु अदन्नु निरासमाडुवदरगोस्कर मूलवा-क्यवन्नु अवतरिसुत्तारे यदा एंब वाक्यदिंद—यदा यावकालक्के अनन्नमन्नत्वेन मन्यते अनन्नवु अन्नत्वेन तिळियल्पडुत्तदे तदा आकालक्के तर्कबाधितं भवत्येवानन्नं, यदीदमन्नंस्यात् एंब तर्कदिंद अनन्नत्व प्रत्यक्षवु बाधितआ-गेआगुत्तदे. इत्यतआह, ईप्रकार पूर्वपक्षवंदरे आचार्यरु हेळुत्तारे—" दृष्टच-बाधितदृष्टस्य " इदक्के पूर्ववाक्यदिंद संबंधमाडबेकु अदु माडलु वाक्यह्यागे निदिरुत्तदे एंदरे—दृष्टचबाधितदृष्टस्यान्नत्वे तर्केण दुर्घटेपि तस्यानन्नत्वं नच भवति इन्नमेले मूलवाक्यार्थ—चलवदृष्टियिंद अबाधितवादंथ दृष्टवस्तुविगे

( यावनालादिअन्नक्के) अन्नत्वकूडुत्तिरलु तर्कदिंद अन्नत्व दुर्घटवादाग्यादरू ( बाधितवादरू ) अदक्के ( अन्नत्वक्के ) अनन्नत्ववु कूडुवदेइल्ल. तात्पर्यवु पूर्वदंते तिळियतक्कद्दु. ( स्पष्टीकरण-अन्नत्वेन दृष्टवादंथाद्दु यावागे अनन्नवु आगुत्तदे आगबलवदनन्नत्वदृष्टिइंद अन्नत्वदृष्टिगे बाध आगे आगुत्तदे केवलतर्कदिंद अल्ल. तर्कदिंद आगुत्तदे एंतेंदपक्षदल्लि अबाधित-दृष्टांतस्थलदल्यादरू अनन्नत्वप्रसंगबरुवदु ईप्रकारवागि बलवद्दृष्टयबाध एंबुवंथ मूलवाक्यद तात्पर्यदंते इदन्नादरु तिळियतक्कद्दु ) दृष्टयबाधित-दृष्टक्कादरु ( अन्नक्कादरु ) तर्कदिंद बाधविरुत्तदे एंत ननु एंब वाक्यदिंद पूर्वपक्षकारनु शंकिसुत्ताने. यस्य अंदरे याव दृष्टयबाधितदृष्टक्कादरु वास्तविक अन्नक्कादरू एंत तात्पर्य ) तर्कदिंद अनन्नत्ववु बाधितवागुत्तदे अदु अनन्नवे इरुत्तदे हीगादबळिक भोजनादिव्यवहार कूडुवदिल्ल एंत शंकिसतक्कद्दल्ल याकंदरे अदु अनन्नवैलक्षण्यदिंद उपपत्तियागुत्तदे. पूर्वपक्षकारनु नम्म शंकावन्नु ताने शंकिसिकोंडु समाधान हेळुत्ताने नहि इत्यादिवाक्यगळिंद-नहि तर्केण पदार्थानां स्वरूपासत्वमुच्यते, तर्कदिंद पदार्थगाळिगे स्वरूपासत्व हेळल्पडुवदिल्ल किं तर्हि प्रतिपन्नस्वभावअनुपमर्देन, अंदरे श्री रा. ती. तीर्थर टिप्पणिप्रकार प्रमितवस्तुस्वभाव अनुपमर्ददिंद अथवा श्री. श्री. ती. टिप्पणिप्रकार असद्विलक्षणस्वरूपअनुपमर्ददिंद ( असद्विलक्षणस्वरूप कडमि माडदे यथास्थित इट्टु एंत अर्थ ) तदनिर्वाच्यमेव, तत् अंदरे प्रमितवस्तु अनिर्वाच्यवेंत करासिकोळ्ळुत्तदे ई प्रकार पूर्वपक्ष प्राप्तवागलु सिद्धांतकाररु हेळुत्तारे-नीनु हेळिदंते इद्दपक्षदल्लि नेदं रजतं एंबुवंथ बाधकज्ञानसमनंतरदल्लि शुक्तिकाअनुभवदंते ( इदु रजतवल्ल शुक्ति ( सिंपु ) इरुत्तदे एंबुवंथ अनुभव ) अन्न, अनन्नवैलक्षण्यअनुभव प्रसंग इरबेकु. अनुभवविल्लवेंब मातवन्ने मूलकाररू हेळुत्तारे-"अन्नानन्नवैलक्षण्यवु अनुभवक्के बरुवदिल्ल." ( स्पष्टीकरण-पूर्वपक्षसहित-बालकरिगे दारव्यआगबेकेंबदागि बरेयुत्तेने प्रत्यक्षदृष्टवादंथ अन्नक्के तर्कबाधदिंद अनन्नत्वाभाव इद्दाग्यादरु अनन्नत्ववैलक्षण्यमात्रदिंद अदनादि (भोजनादि ) प्रवृत्ति कूडुत्तदे एंत पूर्वपक्षबरलु श्रीमदानंदतीर्थरु हेळुत्तारे-युक्त्यनुसंधातुः अंदरे युक्तिअनुसंधानमाडुववनिगे इदु अन्न अल्ल अनन्नवैलक्षण्यदिंद नानु भोजनमाडुत्तेने ई प्रकार अनुभवइल्लवेंब भाव. मूलार्थवन्नु अनुवाददिंद विवरणमाडि उत्तरवाक्यवन्नु अवतरिसुत्तारे कुतइत्यादिवाक्य-

दिंद युक्त्यनुसंधानमाडुववनु ( तर्कवादि ) "अन्नानन्नविलक्षणमिदं" ई प्रकार अनुभव इल्लवेंदु यावकारणदिंदेंदरे अनुत्ताने एंदरे तत्कार्यव्यवहाराभावात् । आ प्रकार कार्यरूपव्यवहार ( अन्नानन्नविलक्षणमिदं एंब वाक्यप्रयोगव्यवहार ) इल्लवेंब मातवन्न दशप्रमतिगळु हेळुत्तार— "नच तथा व्यवहारः" अंदरे आ प्रकार व्यवहारविल्ल. स्पष्टीकरण—अनुभवाभाववु याव कारणदिंद इल्लवेंत कल्पना माडुत्तारी एंत शंकिसिदरे हेळुत्तारे—अनुभवविल्ल एंब मातिन विषयदल्लि व्यवहारइल्लवेंब अनुमानप्रमाणदिंद हेळुत्तवे एंत अर्थ—

**टीका—ननु न व्यवहारएवानुभवे प्रमाणं विनापि व्यवहारेण बालमूकादीनामनुभवसद्भावात् अतो व्यहाराभावेपि तथानुभवो युक्त्यनुसंधातुः किं न स्यात् । स्याद्यदि तथान्यदपि किंचित्प्रमाणं स्यात् । नचैतदस्तीत्याह ॥**

**मूल—नच तत्र किंचिन्मानं ।**

**टीका—नचानुभवाभावे प्रत्यक्षस्यसत्वात्किमनेनेति वाच्यं । विप्रतिपन्नंप्रतिसत्युपायांतरेप्रत्यक्षस्यानवतार्यत्वात् । दृष्टस्यवस्तुन इत्यादिनोक्तमुपसंहरति ॥**

**मूल—अतोविशिष्टादियुक्तिनिराकरणयुक्तीनामपि विशिष्टाद्यपेक्षत्वाज्जात्युत्तरमिति न युक्तिबाधापि ।**

**टीका—यतो विशिष्टादिनिराकरणतर्कउक्तविधयातर्कांगपंचकविकलोतोसौ जात्युत्तरं । तस्मान्न श्रुतीनां विशिष्टार्थप्रतिपादकत्वस्य तर्कबाधेति । प्रकृष्टप्रकाशश्चंद्रइत्यादिनांतरंगानुपपत्तिबाधा परिहृता दृष्टस्येत्यादिना बाह्यतर्कबाधा । अतः समुच्च-**

यार्थोऽपिशब्दः । ननु सिद्धमपि दूषणासमर्थमुत्तरं जातिरित्युच्यते । असामर्थ्यंच द्विविधं । साधारण-मसाधारणंच तत्र साधारणं स्वव्याहतिः असाधार-णंतु युक्तांगहानिरयुक्तांगाधिकत्वमविषयवृत्तित्वंचेति त्रिविधं । तत्र साधारणेनासामर्थ्येन विना कथं युक्तांगहीनतामात्रेण तर्कस्य जातित्वमित्यतउक्तं विशिष्टादीति । विशिष्टादिनिराकरणतर्को हि विशि-ष्टादिकमपेक्ष्योत्पद्यते । भिन्नादिविशिष्टाज्ञाने विशि-ष्टस्य विशेषणादिभ्यो भिन्नत्वे दंड्यानयननियोगेऽ-न्यानयनप्रसंगइत्याद्यापादनायोगात् । एवं विशेष-णाद्यपेक्षापि द्रष्टव्या । तथाचस्वापेक्षणीयमेव विशि-ष्टादिकं निराकुर्वन्नयं स्वात्मानं व्याहंतीति कथं न जात्युत्तरं । परसिद्धमेव भिन्नादिकमंगीकृत्य तर्क-प्रवृत्तेर्नैवमितिचेन्न । परसिद्धिमात्रेण विपर्ययपर्यवसा-नाद्यनुपपत्तेः । तत्रच विशिष्टाद्यपेक्षानियमइति संक्षेपः । नित्यसमाचेयंजातिः ।( यथोक्तं ) विवक्षि-तधर्मस्य तदतद्रूपविकल्पानुपपत्त्या धर्मिणस्तद्विशि-ष्टत्वखंडनं नित्यसमेतियदर्थमयं तर्कविरोधपरिहारा-दिप्रपंचस्तदुपसंहरति ॥

मूल—अतोनिखिलगुणगणाढ्यमेव ब्रह्म श्रुत्याभिप्रेतं।

टीका—यतःपरास्येत्यादिषु श्रुतिषु विशिष्टप्रति-पादनं प्रतीयते यतश्चांतरानुपपत्तेर्बाह्यतर्कस्यच बाधा नास्ति । एवंच न सूत्रकारस्य श्रुतिविरोधइतिसिद्धं ।

श्री वे. ती. टि.—तथान्यदपीति । यथाबालमूकाद्यनुभवानुमापकं व्यवहारादन्यचेष्टाविशेषादिकं प्रमाणमस्ति । न तथा प्रकृत इत्यर्थः ॥ अनुभवाभावइति । अन्नानन्नवैलक्षण्यानुभवाभावइत्यर्थः । अनेन । व्यवहाराभावलिंगकानुमानेन ॥ उपायांतरइति । प्रमाणांतरइत्यर्थः ॥ अनवतार्यत्वादिति । प्रत्यक्षोपन्यासेऽनुभवकलहस्स्यादितिभावः। विशिष्टापेक्षत्वादित्यंशं व्याख्यातुं तन्निवर्त्याशंकां दर्शयति ॥ नन्विति ॥ छलव्यावृत्त्यर्थं सिद्धमपीतिविशेषणं । पक्षे सिद्धमित्यर्थः । पक्षधर्मत्वोपेतमितियावत् । छलोत्तरेतु न पक्षधर्मत्वं । आढ्योयं नवकंबलवत्वादिति नूतनत्वाभिप्रायेण वादिना प्रयुक्ते प्रतिवादी संख्यार्थत्वमारोप्य वदति । त्वदीयो हेतुः स्वरूपासिद्धः। एकस्यैव कंबलस्योपलंभादिति । तथाच नवकंबलवत्त्वादितिहेतुर्नस्वसाध्यसाधकः । स्वरूपासिद्धत्वादितिछलवादिनाऽसाधकतासाधनीया । तत्रच हेतुर्न पक्षेस्ति । नवकंबलवत्त्वस्य वस्तुगत्त्या स्वरूपासिध्यभावात् । अतो न तत्पक्षधर्मतोपेतमिति सिद्धमपीत्यनेन तद्व्यावृत्तिः। जात्युत्तरेतु धूमवत्त्वादितिहेतौ वादिनोक्ते प्रतिवादीव्याप्तिमनंगीकृत्य वदति । यदि महानससाधर्म्याद्धूमात्पर्वतोग्निमान्स्यात्तर्हि ऱ्हदसाधर्म्याद्द्रव्यत्वान्निरग्निः किं न स्यात्तथाच त्वदनुमानस्य सत्प्रतिपक्षत्वमिति । तदात्वदीयोयं धूमवत्वादिति हेतुर्न स्वसाध्यसाधकः युक्तांगहीनप्रतिप्रमाणेन प्रतिपक्षितत्वादित्युत्तरं व्याप्तिहीनमपि पक्षधर्मतोपेतं भवतीति न लक्षणाननुगमइति भावः। साधारणं सर्वजातिसाधारणं। असाधारणं । न सर्वजातिसाधारणं ॥ विशिष्टादिकमपेक्ष्येति । विशिष्टादिकप्रतीतिमपेक्ष्येत्यर्थः । एतदेवोपपादयति ॥ भिन्नान्यादीति ॥ विशेषणाद्यपेक्षापीति । विशेषणादिप्रतीत्यपेक्षापीत्यर्थः आदिपदेन भेदादिग्रहणं । स्वापेक्षणीयं स्वोपजीव्यप्रातिपत्तिकं ॥ तर्कप्रवृत्तेरिति । दंडद्यानयननियोगेऽन्यानयनप्रसंगइत्यादितर्कप्रवृत्तेरित्यर्थः ॥

विपर्ययपर्यवसानाद्यनुपपत्तेरिति । अत्रादिपदेन पक्षनिर्देशव्याप्त्यादिज्ञानं ग्राह्यं। नचान्यदानीयते । अपितु दंडविशिष्टो देवदत्तएवेति विपर्ययपर्यवसानं वाच्यं । नचैतत्स्वस्यविशिष्टान्यादिपदार्थज्ञानाभावे परज्ञानमात्रेण संभवति । अनुभवविरोधात् । एवं पक्षनिर्देशव्याप्तिज्ञानान्यथानुपपत्त्यापि परस्य विशिष्टज्ञानमस्तीत्युपपादनीयं । अतः स्वकीयविशिष्टादिप्रतीतिरपि तर्कोपजीव्येतितन्निरासकत्वे तर्कस्य स्वव्याहतिरिति भावः । नन्वस्त्येव परस्य विशिष्टप्रतीतिर्भ्रमरूपा तर्केणच विशिष्टादिसत्ता निराक्रियते । अतो न व्याहतिरितिचेन्न प्रतीतस्योत्सर्गतस्सत्वनियमात् तर्कस्यान्योन्याश्रयतयाऽबाधकत्वादन्यस्यच बाधकस्यानुपलंभात्तदिदमुक्तं । इतिसंक्षेपइति । इतीत्यनंतरं लक्षणादितिशेषः । क्वचिन्नित्यसमाचेयं जातिरित्यनंतरं यथोक्तमिति पाठः। तदानायंशेषइति ज्ञातव्यं । यतइति यतश्चेति यच्छब्दद्वयस्यातइति मूलेनान्वयः। गुणगणाढ्यस्य ब्रह्मणः श्रुत्यभिप्रेतत्वे किंसिद्धमित्यपेक्षायामाह ॥ एवंचेति ।

श्री रा. ती. टि. किंनस्यादितिचोद्योत्तरमाह ॥ स्याद्यदीति॥ तथेति । अन्नानन्नविलक्षणमेतदित्यत्राबाधितदृष्टेऽन्नेव्यवहारादन्यत्किंचित्प्रमाणं स्याद्यदीत्यर्थः । इदमन्नमेव नतु तद्विलक्षणमिति भोक्तुः प्रत्यक्षस्यैव वैलक्षण्यानुभवाभावे सत्त्वेन नच तथा व्यवहारइत्यादिवाक्यद्वयेन वैलक्षण्यव्यवहाराभावलिंगेन मानाभावहेतूनांच वैलक्षण्यानुभवाभावोपपादनं कुतः कृतमित्याशंक्य निराह ॥ नचानुभवेति ॥ अनेनेति । नचतथेत्यादिग्रंथेनेत्यर्थः । उपायांतरे व्यवहाराभावादिरूपइत्यर्थः । मूलं योजयति ॥ यतइति । भिन्नत्वादिविकल्पासहत्वरूपस्तर्कइत्यर्थः । इतिशब्दो हेत्वर्थइत्यभ्युपेत्यइति नयुक्तिबाधापीति शेषार्थमाह ॥ तस्मादिति । सत्यं ज्ञानमित्यादिश्रुतीनामित्यर्थः । अपिपदार्थं दुर्बोधत्वाद्व्यनक्ति ॥ प्रकृष्टेति । प्रकृष्टप्रकाशश्चंद्रइत्यादौ प्रकृष्टत्वादिविशेषणानिसंत्येवे-

त्यादिना सत्यज्ञानादिवाक्यानां विशिष्टार्थपरत्वे स्वरूपमात्रप्रश्नं प्रत्युत्तरत्वायोगरूपांतरंगानुपपत्तिबाधा परिहृतादृष्टस्य वस्तुनो बलवद्दृष्टिंविनेत्यादिनाच विशिष्टं विशेषणादितोभिन्नमभिन्नंवेत्यादिविकल्पासहत्वादनिर्वाच्यमेवेत्येवं रूपबाह्यतर्कबाधा परिहृतेत्यर्थः। नकेवलमंतरंगानुपपत्तिबाधा किंतु बाह्यतर्कबाधापि नेतिसमुच्चयेऽपिशब्दइत्यर्थः। विशिष्टेत्याद्यंशस्य व्यावर्त्यमाह ॥ ननु सिद्धमपीति। छलोत्तरेऽनतिव्याप्त्यर्थमेतद्विशेषणं ॥ साधारणमिति। साधर्म्यवैधर्म्यादिसर्वजातिष्वनुगतमित्यर्थः। अपेक्ष्योत्पद्यतइत्येतद्व्यनक्ति ॥ भिन्नादिविशिष्टाज्ञानइति ॥ एवं विशेषणादीति। विशेषणादेरज्ञाने विशेषणं विशेष्याद्भिन्नंचेन्मेरुमंदरयोरिव विशेषणत्वायोगइत्याद्यापादनायोगादिति तर्कस्य विशेषणाद्यपेक्षाज्ञेया इत्यर्थः ॥ विपर्ययइति। तस्माद्विशिष्टं विशेषणादिभ्यो भिन्नं नेत्यभिन्नं नेति भिन्नाभिन्नं नेतिवा विपर्ययेपर्यवसानं विशिष्टस्य विशेषणादिभेदादिना व्याप्त्यादिकं वा परसिद्धमात्रेण न युक्तमित्यर्थः। सामान्यस्य विना विशेषमपर्यवसानात्केयं जातिरित्यत आह ॥ नित्येति। यथोक्तमिति तार्किकैः। धर्मस्य तदतद्रूपविकल्पानुपपत्तितः। धर्मिणस्तद्विशिष्टत्वभंगो नित्यसमोमतइति कारिकार्थमनुवदति ॥ विवक्षेति। शब्दोऽनित्यइत्युक्तेऽनित्यत्वमनित्यं नित्यंवा आद्ये धर्मिणः शब्दस्य नानित्यत्वं। किंतु नित्यत्वमेव स्यात्। द्वितीये नित्यधर्माश्रयस्य नानित्यत्वमित्येवं विवक्षितधर्मवैशिष्ट्यखंडनं धर्मिण इत्यर्थः ॥ तर्कविरोधपरिहारादिति। सत्यज्ञानादिवाक्यानां विशिष्टार्थकत्वप्रपंचनं प्रकृष्टप्रकाशश्चंद्रइत्यादिष्वित्यादिनोक्तमादिपदार्थः। अतः पदपरामृष्टं द्वेधा दर्शयति। यतइति। अंतरंगेति। सत्यज्ञानादिवाक्यस्य विशिष्टपरत्वे स्वरूपमात्रप्रश्नोत्तरत्वरूपानुपपत्तेर्बाधाभिन्नत्वादिविकल्पासहत्वरूपबाह्यतर्कस्यच बाधेत्यर्थः। अतइति योज्यं। यदुक्तं पूर्वत्र शून्यवादिनिरासपराणां

नासतइत्यादिसूत्राणां शून्यमिवाखंडं ब्रह्मेति वदतो मायिनोपि मतस्य निरासकत्वे अखंडब्रह्मबोधकश्रुतिविरोधः सूत्रकारस्येति । तन्निरासोपसंहारोपि सिद्धइत्याह ।। एवंचेति । गुणगणाढ्यस्यैव श्रुत्यभिप्रेतत्वे सतीत्यर्थः ।

श्री श्री. ती. टि.--तथानुभवः । अन्नानन्नविलक्षणत्वानुभवः । युक्त्यनुसंधातुः यदीदमन्नं स्यादिति युक्त्यनुसंधानवतः । अनवतार्यत्वात् अनुभवकलहापत्याऽवक्तव्यत्वादित्यर्थः । जात्युत्तरं असदुत्तरं । अपिशब्दसमुच्चेयमाह ॥ प्रकृष्टेति । कश्चंद्रइत्यादिप्रश्नस्यकैर्लक्षणैर्विशिष्टइत्यर्थकत्वेन प्रश्नोत्तरयोर्वैयधिकरण्यरूपांतरानुपपत्तिबाधापरिहृतेत्यर्थः ॥ बाह्येति । विशिष्टं विशेषणादिभ्योभिन्नमभिन्नंवेत्यादिरूपा बाह्यानुपपत्तीत्यर्थः । तथाच न केवलमांतरानुपपत्तिबाधा नास्ति किंतु बाह्यतर्कबाधापि नास्तीति मूलार्थो द्रष्टव्यः। युक्तांगेति । व्याप्त्यादिरूपेत्यर्थः । जातित्वमिति । सामान्यलक्षणाभावादितिभावः । तदुपपादयति ॥ भिन्नान्यादीति । विशिष्टं । विशेषणादिभ्यो भिन्नमित्यत्र भिन्नमिति विशिष्टं । अन्यानयनादिप्रसंगइत्यत्र अन्येति विशिष्टमिति विवेकः ।। विपर्ययेति यदिविशिष्टं तत्त्वं स्यात्तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात् । नचभवत्यन्यतमप्रकारोपेतं । तस्मान्नतत्वमिति विपर्ययपर्यवसानं परप्रसिध्द्यानुपपन्नमित्यर्थः । विपर्ययपर्यवसानं स्वरीत्यैव कार्यं अस्मद्रीत्यनुसारेण विपर्ययपर्यवसानमेव न संभवतीति भावः ॥ तत्रचेति । विशिष्टादिनिराकरणतर्कइत्यर्थः । विवक्षितधर्मस्येति । शब्दोऽनित्यइत्यत्रानित्यत्वं नित्यमनित्यंवेति विकल्प्याद्ये नित्यधर्माश्रयत्वेन नित्यत्वापत्त्या शब्दोऽनित्यइत्यनुपपत्तिः । द्वितीयेऽनित्यत्वस्यानित्यत्वे शब्दस्य नित्यत्वापत्त्या शब्दोऽनित्य इत्यनुपपत्तिरित्युदाहरणं । एवं प्रकृते विशिष्टादेर्विशेषणादिभ्यो भेदांगीकारे भेदरूपधर्मस्य भिन्नाभिन्नत्वविकल्पानुपपत्त्या धर्मिभूतविशिष्टादेस्तद्विशिष्टत्वस्य भेदविशिष्ट-

त्वस्य खंडनान्नित्यसमजातिरियमित्यर्थः । आंतरानुपपत्तेर्बाधेत्यन्वयः । अनुपपत्तिनिरूपिता बाधा । अनुपपत्तिप्रयुक्ताबाधेत्यर्थः । बाह्यतर्कस्येत्येतदप्येवमेव व्याख्येयं ॥ नास्तीति । तथाच प्रकृष्टप्रकाशश्चंद्रइत्यादिष्वित्यादिनांतरंगबाधा परिहृता । दृष्टस्य वस्तुनइत्यादिना बाह्यतर्कबाधाच परिहृतेति यावदित्यर्थः ॥

टीकेय अर्थ—परनु शंकिसुत्ताने—अनुभवविषयदल्लि व्यवहारवे प्रमाणइरुत्तदे हीगेनु इल्ल (अन्नवु अनन्नविलक्षण इरुत्तदे हीगे अनतक्क रूढि लोकदल्लि इल्लवेंब भाव) याकंदरे व्यवहार इल्लदे इद्दाग्यादरू बाल. मूकादिगळिगे अनुभव इद्दे इरुत्तदे. आदकारण व्यवहार इल्लदे इद्दाग्यादरु आप्रकार अनुभववु युक्तिअनुसंधानमाडुववनिगे (यदादिमन्नं स्यात् एंत तर्कमाडुववनिगे) याके इरबारदु एंत केळिदरे सिद्धांतकाररु स्याद्यदि एंब वाक्यदिंद उत्तरकोडुत्तारे. ईवाक्यद अन्वय ह्यागंदरे "यदि अन्यदपिकिंचित्प्रमाणः स्यात् तदातथास्यात्" । इदर अर्थ—यथा अंदरे ह्यागे बालमूकाद्यनुभवअनुमापकवु (सूचकवु) व्यवहारदेसेयिंद अन्यवादंथ चेष्टाविशेषादिगळु प्रमाणरूप इरुत्तवे अदरंते युक्त्यनुसंधातनिगे इद्दरे व्यवहार इरदे इद्दाग्यादरू अनुभव कूडीतु परंतु हागे प्रकृतदल्लि इल्लवेंब बगे मूलकाररू हेळुत्तारे. "तत्र अंदरे अन्नानन्नविलक्षण इरुत्तदे एंब विषयदल्लि एनु प्रमाणविल्ल." अनुभवाभावे अंदरे अन्नानन्नवैलक्षण्यअनुभवाभावविषयदल्लि प्रत्यक्षप्रमाणवे इरुत्तिरलु अनेन अंदरे नच तथा व्यवहारः । नच तत्र किंचिन्मानं । एंब वाक्यद्वयदिंद व्यवहाराभावलिंगक अनुमानदिंद याके प्रतिपादन माडिदारि एंत शंकिसिदरे हागे अनकूडदु एंत अन्नुत्तारे. याकंदरे विप्रतिपन्नंप्रति अंदरे वादियकुरितु व्यवहाराभावरूपउपायांतर (प्रमाणांतर) इरतिरलिक्कागि प्रत्यक्षप्रमाण हेळतक्कद्दल्ल. याकंदरे प्रत्यक्षप्रमाण हेळिदरे अनुभवकलह उंटागुत्तदे. दृष्टस्य वस्तुनः इत्यादि मूलवाक्यगळिंद हेळिद्दन्नु आचार्यरु उपसंहारमाडुत्तारे. ईमूलवाक्यद अर्थ बरेयुवदरकिंत मोदले ह्लवु संगतिगळन्नु हेळुत्तेने. अतः अंदरे विपर्ययपर्यवसानादितर्कांगवैकल्यवरुवदरिंद एंत अर्थ. विशिष्टादियुक्ति एंबुवदरल्लिद्द अपिपददिंद कश्चंद्र एंब प्रश्नके कैर्विशेषणैर्विशिष्टः एंब अर्थ इरुवदरिंद प्रश्नोत्तरगळिगे वैयधिकरण्यरूप अंतरअनुपपत्तिरूप बाधइल्ल इष्ट अल्ल

विशिष्टवु विशेषणादिगळदेसेयिंद भिन्नवो अभिन्नवो इत्यादि बाह्यतर्क बाधावादरू इल्लवेंब इष्टल्लमातु काडियल्लिद्द अपिशब्ददिंद ग्रहणमाडतक्कद्दु एंत अर्थ. इतिशब्दहहेत्वर्थदल्लि इरुत्तदे अदक्के तस्मात् एंत अर्थ माडबेकु इन्नमेले मूलवाक्यद अर्थ " विपर्ययपर्यवसानादितर्कांगवैकल्यवन्नरुदरिंद विशिष्टादियुक्तिनिराकरणयुक्तिगळिगादरू स्वोपजीव्यबिरोधभयद्देसेयिंद विशिष्टाद्यपेक्षत्व अवश्य बेकायितु इदरिंद अर्थात् तर्कक्के जात्युत्तरत्व प्राप्तवायितु. आदकारण श्रुतिगळिगे विशिष्टार्थप्रतिपादकत्वक्के तर्कबाधाइल्ल. अंतरंगअनुपपत्तिबाधाइल्ल बाह्यतर्कबाधावादरू इल्ल. " स्पष्टीकरण टीकादल्लि बरुत्तदे. मूलवन्नु योजनामाडुत्तारे यत एंब वाक्यदिंद यतः अंदरे यावकारणद्देसेयिंद विशिष्टादिनिराकरणतर्कवु [ भिन्नत्वादिविकल्पअसहत्व ( विकल्पगळु कूडदे इरुविके ) रूपतर्क ] उक्तविधदिंद तर्कांगपंचकवैकल्यदिंद युक्तइरुत्तदेयो आ कारणद्देसेयिंद अदु ( तर्कवु ) असदुत्तर इरुत्तदे ( सरियागि उत्तर आगलिल्लवेंत अर्थ ) आदकारण विशिष्टार्थप्रतिपादनमाडुवंथ सत्यंज्ञानमनंतं एंब श्रुतिगळिगे तर्कबाधविल्ल प्रकृष्टप्रकाशश्चंद्रः इत्यत्र प्रकृष्टत्वादिविशेषणानि संत्येव इत्यादि मूलवाक्यगळिंद अंतरंगअनुपपत्तिबाधापरिहारवायितु. दृष्टस्य वस्तुनः इत्यादिवाक्यगळिंद बाह्यतर्कबाधा परिहारवायितु आदकारण मूलवाक्यदल्लिद्द अपिशब्दवु समुच्चयार्थदल्लि इरुत्तदे. ( अंतरंगअनुपपत्तिबाह्यतर्कमुंतादवुगळल्लि ) स्पष्टीकरण—मोदलिगे स्वल्पमातुगळन्नु बरदु बालकरिगे तिळियुवंते मार्गप्रदर्शनमाडिकोट्टु नंतर श्री. श्रीनिवासतीर्थर टिप्पणि भाषांतरमाडि संपूर्ण तिळिसुत्तेने. प्रकृष्टप्रकाशश्चंद्रएंबुव स्थळदल्लि अंतरअनुपपत्तिबरुत्तदे ह्यागंदरे इदेवाक्यदल्लि हेळिद शब्दगळु कूडदे इरुविके इदु अंतरअनुपपत्तिएंदु करसिकोळ्ळुत्तदे. इन्नु दृष्टस्य वस्तुनः एंब स्थळदल्लि भिन्नमभिन्नं भिन्नाभिन्नं एंबुवदु बाह्यतर्कवेंत तिळि. केवलवाक्यदल्लिये ईशब्दगळु इल्ल. इन्नमेले श्रीनिवासतीर्थर टिप्पणि भाषांतर माडुत्तेने. कश्चंद्रइत्यादिप्रश्नके कैर्लक्षणैर्विशिष्टः ई अर्थ इरुवदरिंद प्रश्नोत्तरगळिगे वैयधिकरण्यरूप अंतर अनुपपत्ति बाध परिहारवायितु. विशेष स्पष्टीकरण—कश्चंद्रः एंब प्रश्नवु स्वरूपमात्रपरवागिरुत्तदे एंत पूर्वपक्षकारनु अन्नलु प्रकृष्टप्रकाशश्चंद्रः एंब उत्तरवु विशिष्टार्थदल्लि इरुत्तदे कारण वैयधिकरण्यरूप अनुपपत्ति प्राप्तवायितु एंत शंकाबरुवदरिंद कश्चंद्रः एंबुवदके कैर्लक्षणैर्विशिष्टः एंत अर्थ

माडलागि वैयधिकरण्यरूपअंतरअनुपपत्ति बाधपरिहारवायितु एंत अर्थ. बाह्य एंबुवदक्के श्रीनिवासतीर्थर टिप्पणि भाषांतर—विशिष्टवु विशेषणादिगळिंद भिन्नवो अभिन्नवो इत्यादिरूपबाह्य अनुपपत्ति एंत अर्थ. तात्पर्य एनायितु एंदरे—केवल अंतरानुपपत्ति बाध इल्ल इष्टे अल्ल बाधतर्कबाधआदरु इल्ल एंत मूलार्थ तिळिदु कोळ्ळतक्कद्दु. विशिष्टापेक्षत्वात् एंत मूलदल्लिद्द अंशवन्नु व्याख्यानमाडुवदरगोस्कर शंकावन्नु प्रदर्शन माडुत्तारे ननु एंब वाक्यदिंद. मोदलिगे हलवु मातुगळन्नु हेळुत्तेने असदुत्तरं जातिः एंब जातिलक्षणवु छलदल्लि बरबारदंत (जातिएंबुवदन्नु छलदेसेयिंदवारणमाडुवदरगोस्कर) सिद्धमपि एंब विशेषणकोट्टरु. गौतमऋषियु पदार्थगळु १६ इरुत्तवे एंत निरुपण माडिद्दाने अवुगळल्लि छल मत्तु जाति मोदलादवुगळु बंदिरुत्तवे. अवु याव याववु इरुत्तवे एंब बग्गे सूत्रवन्नु हेळुत्तेने. "प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतासिद्धांतावयवतर्कनिर्णयवाद जल्पवितंडाहेत्वाभासछलजातिनिग्रहस्थानानां तत्वज्ञानान्निश्रेयसाधिगमः" शंकायावदु अंदरे सिद्धविद्दाग्यादरू (प्रमाणप्रमितविद्दाग्यादरु) दूषणामाडलिक्के असमर्थवाद उत्तरवु जाति एंत करसिकोळ्ळुत्तदे. ईवाक्यदमेले वदेशतीर्थरटिप्पणि इरुत्तदे अदर ओंदोंदे वाक्यवन्नु हिडिदु अर्थ बरेयुत्तेने.

**टिप्पणि—छलव्यावृत्यर्थं सिद्धमपीति विशेषणं**

अर्थ—छलदल्लि अतिव्याप्ति बरबारदु एंबसलुवागि सिद्धमपि एंत जातिगे विशेषणकोट्टरु (छलदल्लि प्रमाणसिद्धमातु इरुवदिल्ल कापट्यविरुत्तदे एंब भाव)

**टिप्पणि——पक्षेसिद्धमित्यर्थः । पक्षधर्मत्वोपेतामिति यावत् । छलोत्तरेतु न पक्षधर्मत्वं**

अर्थ—पक्षदल्लि सिद्धवेंत अर्थ—(पक्षयावदु ह्यागे सिद्धविरुत्तदे एंब मातु मुंदे स्पष्टवागुत्तदे) पक्षधर्मदिंद विशिष्टवेंत अर्थ. (पक्षदल्लि हेतु इरुविके पक्षधर्मता) छलोत्तरदल्लि पक्षधर्मत्वइरुवदिल्ल.

**टिप्पणि——आढ्योयं नवकंबलवत्वादिति नूतनत्वाभिप्रायेण वादिना प्रयुक्ते प्रतिवादी संख्यार्थत्वमारोप्य वदति । त्वदीयो हेतुः स्वरूपासिद्धः। एकस्यैव कंबलस्योपलंभादिति । ( छलमातु यावदु मत्तु अदरल्लि पक्षधर्मताह्यागे इरुवदिल्लवेंब बग्गे इदे उदाहरण )**

अर्थ—अयं । आढ्यः । नवकंबलवत्वात् ई अनुमानदल्लि अयं अंदरे पुरोवर्तियाद मनुष्यनु पक्ष आढ्य अंदरे श्रीमंतनु श्रीमत्वसाध्य होसकंबळी- इरोणदरिंद इदु हेतु. ईप्रकार वब्बनु प्रयोगमाडलु मत्तोब्बनु नवशब्दक्के वंभत्तसंख्यार्थकत्व कल्पनामाडि नवकंबलवत्वरूपहेतु पुरोवर्तिमनुष्यनल्लि इल्ल स्वरूपासिद्धिबंतु. ( पक्षेहेत्वभावः स्वरूपासिद्धिः ) अंत अन्नुत्ताने. इल्ले प्रयोगमाडुववनु नवशब्दक्के नूतनार्थविवक्षादिंद प्रयोगमाडिरुत्ताने प्रति- वादियु अदक्के एरडने अर्थ संख्याकल्पनामाडि स्वरूपासिद्धिहेळुत्ताने इदे मातु मुंदिन वाक्यदल्लि बरुत्तदे.

टिप्पणि—तथाच नवकंबलत्वादिति हेतुर्न स्वसाध्यसाधकः । स्वरूपासिद्धत्वादिति छलवादिनाऽसाधकता साधनीया। तत्रच हेतुर्न पक्षेऽस्ति। नवकंबलवत्वस्य वस्तुगत्या स्वरूपासिध्यभावात्। अतो न तत्पक्षधर्मोपेतामिति सिद्धमपीत्यनेन तद्व्यावृत्तिः ।

अर्थ—तात्पर्य—नवकंबलवत्वात् एंब हेतुवु स्वसाध्य ( आढ्यत्व ) साध- कवल्ल स्वरूपासिद्धिबरुत्तदे. ( ओंभत्तुकंबाळिइल्लदे इरुवदरिंद ) एंत छल- वादियिंद साधिसतक्कद्दायितु हीगादबाळिक हेतुवु पक्षदल्लि इल्लदंतेयायितु. नवकंबलवत्वस्य अंदरे ( इल्ले नवशब्दहोसकंबळियेंत विवक्षा ) नूतनकंब- लवत्वक्के वस्तुगत्या अंदरे वास्तविकरीतियिंद. स्वरूपासिध्यभावात् अंदरे स्वरूपासिद्धिइल्ल ( बालकरु एकाग्रचित्तदिंद ईविवरणतिळिदुकोळ्ळतक्कद्दु इल्लदिद्दरे नूतनत्वतिळिदुकोळ्ळुवकालक्के नवसंख्याकत्वतिळिदुकोळ्ळुवप्रसं- गबंदीतु ) अतः अंदरे आदकारण. न तत्पक्षधर्मोपेतं अंदरे छलपक्षधर्मोपेत- अल्ल ( याकंदरे छलपक्षधर्मोपेतत्वनवसंख्याकत्वविरुत्तदे ) आदकारण सिद्धमपीत्यनेन एंबुवंथ टीकावाक्यदिंद छलपक्षधर्मोपेतत्वव्यावर्तनमाडत- क्कद्दु. इन्नमेले जात्युत्तरविषयक्कागि टिप्पणिकाररु प्रतिपादनमाडुत्तारे.

टिप्पणि—जात्युत्तरेतु धूमवत्वादिहेतौ वादिनोक्ते प्रतिवादीव्या- प्तिमनंगीकृत्यवदति ।

अर्थ—जात्युत्तरदल्लि वादियु धूमवत्वात् एंत हेतुहेळलु प्रतिवादियु व्याप्तियन्नु अनंगीकारमाडिकोंडु (वास्तविकरीतियाव्याप्तिअंगीकारमाडतक्कद्दु) उत्तरकोडुत्ताने एनंदरे—

**टिप्पणि—यदि महानससाधर्म्याद्धूमात्पर्वतोग्निमान्स्यात्तर्हि ऱ्हद-साधर्म्याद्द्रव्यत्वान्निरग्निः किन्नस्यात्तथाच त्वदनुमानस्य सत्प्रतिप-क्षत्वमिति ।**

अर्थ—यत्र यत्र धूमः तत्र तत्र अग्निः यथा महानसं एंब उदाहरणदिंद पर्वतदल्लि अग्निसिद्धमाडिदरे यत्र यत्र द्रव्यत्वं तत्र तत्र अग्न्यभावः यथा ऱ्हदः ईप्रकार ऱ्हदसाधर्म्यदिंद पर्वतवु निरग्नियाके आगबारदु. हीगादरु अनुमानमाडलिक्के बरुत्तदे आदकारण वादियिंद उक्तवाद पर्वतोग्निमान् धूमवत्वात् ई अनुमानवु सत्प्रतिपक्षितआगुत्तदे.

(स्पष्टीकरण साध्याभावसाधकंहेत्वंतरं यस्य स सत्प्रतिपक्षः इल्ले सत्प्रति-पक्षह्यागे बंतु एंदरे पर्वतोअग्निमान् धूमवत्वात् महानसवत् हीगेवादियु अनु-मानमाडलु इदक्के प्रतिवादियु पर्वतोनिरग्निमान् द्रव्यत्वात् ऱ्हदवत् ईप्रकार सत्प्रतिपक्षानुमानमाडुत्ताने. )

**टिप्पणि—तदा त्वदीयोयं धूमवत्वादिति हेतुर्न स्वसाध्यसाधकः युक्तांगहीनप्रतिप्रमाणेन प्रतिपक्षितत्वादित्युत्तरं व्याप्तिहीनमपि पक्षधर्मतोपेतं भवतीति न लक्षणाननुगमइतिभावः ।**

अर्थ—तात्पर्यवेनायितेंदरे—ईनिन्न धूमत्वात् एंब हेतुवु स्वसाध्य ( अग्निमत्व ) साधकवागलिल्ल याकंदरे युक्तांगहीन ( व्याप्तिवैकल्य ) प्रतिप्रमाणरूपप्रतिपक्षदिंद प्रतिपक्षितत्ववायितु एंत प्रतिवादियु उत्तर कोट्टनु इदरिंद जात्युत्तरद लक्षण एनायितु एंदरे व्याप्ति हीनविद्याग्यादरू पक्षधर्मोपेत इरुत्तदे एंत अद ह्यागे आयितु. प्रतिपक्षानुमानदल्लिद्द द्रव्यत्वरू-पहेतु पर्वतरूपपक्षदल्लि बरुत्तदे आदकारण पक्षधर्मोपेतत्व बरुत्तदे छलदल्लि हेतु पक्षदल्लि बरुवदिल्ल. असामर्थ्यवु एरडु विध साधारण. असाधरण ईप्रकार. इवेरडुविधगळल्लि साधारणदल्लि स्वव्याहतिः एंब ओंदे प्रकार. असाधारणवु त्रिविधविरुत्तदे. युक्तांगहानि, अयुक्तांगाधिकत्वं, अविषयवृत्तित्वं, ईप्रकार. स्थितिइरुत्तिरलु साधारण असामर्थ्यद होर्तु केवलयुक्तांगहीनतामात्रदिंद तर्कक्के जातित्व ह्यागे कूडुत्तदे एंदरे मूलकाररु विशिष्टादि एंबुवदरिंद समाधान माडिद्दारे अदु ह्यागंदरे विशिष्टादिनिराकरणतर्कवु विशिष्टादि-प्रतीतियन्नु अपेक्षिसिकोंडु उत्पन्नवागुत्तदे भिन्नान्यादिविशिष्टाज्ज्ञान इरुत्तिरलु ( स्पष्टीकरण—विशिष्टं विशेषणादिभ्यो भिन्नं एंबुव स्थळदल्लि

भिन्नं एंबुवदु विशिष्ट इरुत्तदे. अन्यानयनादिप्रसंग एंब मातिनल्लि अन्य एंबुवदु विशिष्ट इरुत्तदे ई प्रकार विवेक, इवेरडूदर अज्ञान इद्दागे एंत अर्थ. इदु श्रीनिवासतीर्थीय मेलिंद बरददे. ) विशिष्टक्के विशेषणादिगळिंद भिन्नत्व हेळिद पक्षदल्लि दंडियन्नु करेदुकोंडु बा एंत अनलु अन्यानयन प्रसंग बरुवदु एंब आपादन कूडलिक्किल्ल. राघवेंद्रतीर्थरु बरेदिद्दारे अवर वाक्यवन्नुदहरिसि अदरभाषांतर माडुत्तेने.

**विशेषणादेरज्ञाने विशेषणं विशेष्याद्भिन्नंचेन्मेरुमंदरयोरिव विशेषणत्वायोगइत्याद्यापदनायोगादिति तर्कस्य विशेषणाद्यपेक्षाज्ञेया इत्यर्थः ।**

अर्थ–विशेषणादिगळ अज्ञानविरुत्तिरलु विशेषणवु विशेष्यद्देसोयिंद भिन्नविरुत्तदे एंत अंदपक्षदल्लि मेरुमंदरगळोपादियल्लि विशेषणत्व कूडुवदिल्लवेंबुवंथ आपादन अयोगवागुत्तदे. आद्कारण तर्कक्के विशेषणादिगळ ज्ञानापेक्षाअगत्य बेकु. ( स्पष्टीकरण–द्वौ नञौ प्रकृतमर्थं साधयतः एंब न्यायदंते विशेषणत्व कूडुवल्लिवेंबुवंथ आपादन कूडुवदिल्ल. इदर अर्थ. एनु अंदरे विशेणत्व कूडुत्तदे आपादनकूडुत्तदे एंत अर्थ )

इन्नमेले तथाच एंब वाक्यद अर्थ–सारांश स्वापेक्षणीयं ( स्वोपजीव्यं ) विशिष्टादिगळन्नु निराकरणमाडुवंथ ईविशिष्टादिनिराकरणतर्कवु स्वात्मनन्ने ( तन्नन्ने ) हननमाडुत्तदे ( स्ववचनविरोधहेळुत्तदे ) अंदबळिक अदु जात्युत्तर ह्यागे आगलिल्ल. " जात्युत्तरवायितु एंत अर्थ. ( इदे मातवन्ने एरडने तरदिंद तिळिसुत्तेने. नम्म विशिष्टादियुक्तिगळन्नु निराकरणमाडलिक्के होंटवनु ( पूर्वपक्षियु ) विशिष्टादियुक्तिगळिंद निराकरणमाडदे अन्यरिंद माडतक्कद्दित्तु. ( याकंदरे विशिष्टादितत्वअल्लवेंत अवन अभिप्रायइरुवदरिंद ह्यागे माडदे तिरुगि विशिष्टादियुक्तिगळन्ने अपेक्षामाडिकोंडु निराकरणमाडिद बळिक जात्युत्तरदोषवायितु ) इन्नमेले परसिद्धमेव एंब टीकावाक्यद अर्थ–परसिद्धवादंथ भिन्नादिकगळन्नु अंगीकारमाडिकोंडु तर्कप्रवृत्ति (दंड्यानयननियोगेऽन्यानयनप्रसंगइत्यादितर्कप्रवृत्ति ) इरुवदरिंद जात्युत्तरकूडुवदिल्लवेंत पूर्वपक्षकारनु अनलु ह्यागे अनतक्कद्दल्लवेंत सिद्धांतकाररु अन्नुत्तारे याकंदरे केवलपरसिद्धिमात्रदिंद विपर्ययपर्यवसानादिगळु कूडुवदिल्ल. विप-

र्ययपर्यवसानादिगळु ह्यागे कूडुवदिल्लवेंब बग्गे श्रीनिवासतीर्थर टिप्पणिबरे- युत्तेने अदु बहळसुलभवदे—

यदिविशिष्टं तत्वं स्यात् तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात् नच भवत्यन्यतमप्रकारोपेतं । तस्मान्न तत्वमिति विपर्ययपर्यवसानं परप्रसिध्यानुपपन्नमित्यर्थः । विपर्ययपर्यवसानं स्वरीत्यैव कार्यं । अस्मद्रीत्यनुसारेण विपर्ययपर्यवसानमेव न संभवतीतिभावः ॥ विपर्ययपर्यवसानादिएंबुवदरल्लिह आदिपददिंद एनुग्रहणमाडतक्कद्दु एंबबग्गे श्रीवेदेशतीर्थरु बरदिद्दारे. अवर टिप्प- णेयन्नु बरेदु अर्थबरेयुत्तेने—अत्र आदिपदेन पक्षनिर्देशव्या- प्त्यादिज्ञानं ग्राह्यं । नचान्यदानीयते अपितु दंडविशिष्टोदेवदत्तए- वेति विपर्ययपर्यवसानं वाच्यं । नचैतत्स्वस्यविशिष्टान्यादिपदार्थ- ज्ञानाभावे परज्ञानमात्रेण संभवति । अनुभवविरोधात् । एवं पक्षनि- र्देशव्याप्तिज्ञानान्यथानुपपत्त्यापि परस्य विशिष्टज्ञानमस्तीत्युपपाद- नीयं । अतः स्वकीयविशिष्टादिप्रतीतिरपि तर्कोपजीव्येति तन्नि- रासकत्वे तर्कस्य स्वव्याहतिरितिभावः ।

अर्थ—आदिपददिंद पक्षनिर्देश हांगु व्याप्त्यादिज्ञानग्रहणमाडतक्कद्दु. दंड्यानयननियोगे अन्यायनप्रसंगवेंत पूर्वपक्षदल्लि हेळित्तु इग्गे इदर विप- रीतमाडतक्कद्दु ह्यागंदरे—अन्यपदार्थवु आनयनमाडल्पड्डुवदिल्ल दंडविशिष्ट- देवदत्तनन्ने आनयनमाडल्पडुत्तदे एंत विपर्ययदिंद पर्यवसानहेळतक्कद्दु. ईमातु स्वतःक्के विशिष्टान्यादिपदार्थगळ ज्ञानइरदे इद्दरे केवलपरज्ञानमात्र- दिंद कूडुवदिल्ल याकंदरे अनुभवविरोधबरुत्तदे. ईप्रकार पक्षनिर्देशव्याप्ति- ज्ञानान्यथानुपपत्तियिंद परगे विशिष्टज्ञानविरुत्तदे एंत हेळतक्कद्दु आदकारण स्वकीयविशिष्टादिप्रतीतियादरू तर्कोपजीव्य इरुवदरिंद ( तर्कदिंदवे स्वकीयविशिष्टज्ञानउत्पन्नवागुवदरिंद एंत अर्थ. ) स्वकीयविशिष्टवन्नु तर्कवु निरासमाडिदपक्षदल्लि तर्कक्के स्वव्याहतिप्राप्तवायितु एंत अर्थ. परनु पुनः शंकिसुत्ताने—परगे विशिष्टप्रतीतियु भ्रमरूपविरुत्तदे. तर्कदिंद विशिष्टादि- सत्तानिराकरणमाडल्पडुत्तदे आदकारण व्याहतिइल्ल ईप्रकार पूर्वपक्षकारनु अनल्लु हीगे अनतक्कद्दल्लवेंत सिद्धांतकाररु अन्नुत्तारे याकंदरे प्रतीतिगे

स्वभावतः सत्वविरुत्तदे प्रतीतियु सत्वशीलवादंथाद्दु एंत अर्थ. इन्नमेले तत्रच एंब टीकावाक्यद अर्थ——तत्र अंदरे विशिष्टादिनिराकरणतर्कदल्लि विशिष्टाद्यपेक्षानियमेन इरुत्तदे. इतिसंक्षेप एंबुवदक्के श्रीवेदेशतीर्थर टिप्पणिबरदु अदर अर्थ बरेयुत्तेने.–

" तर्कस्यान्योन्याश्रयतया बाधकत्वादन्यस्यच बाधकस्यानुपलंभात्तादिदमुक्तं । इतिसंक्षेपइति । इतीत्यनंतरं लक्षणादितिशेषः । क्वचिन्नित्यसमाचेयं जातिरित्यनंतरं यथोक्तमितिपाठः । तदा नायं शेषइति ज्ञातव्यं ।

अर्थ–विशिष्टादिनिराकरणतर्कक्के विशिष्टाद्यपेक्षत्वविरुत्तदे एंत मेले अंदिद्दारे इदरमेलिंद अन्योन्याश्रय बरुवदु एंत शंकिसिदरे हेळुत्तारे–तर्कक्के अन्योन्याश्रयतया अबाधकत्व इरुवदरिंद हागु मत्तेनादरू बाधकवु इरदे इरुवदरिंद इति संक्षेपः एंत टीकारायरु अंदरु. इतिशब्ददनंतर " लक्षणात् " एंबुवदन्नु हच्चिकोंडु शेषपूर्तिमाडिकोळ्ळतक्कद्दु. याव पुस्तकदल्लि " नित्यसमाचेयं जातिः " एंबुवदर नंतर यथोक्तं एंत पाठ इरुत्तदे अल्लि ईप्रकार शेषपूर्ति माडिकोळ्ळतक्कद्दल्ल. नित्यसमा एंब वाक्यक्के श्री राघवेंद्रतीर्थर अवतरणिका–सामान्यद होर्तु विशेषवु निर्णयमाडि हेळलिक्के बरुवदिल्ल. ( वृक्षत्वविद्दरे शिंशुपात्वरूपविशेषवन्नु हेळलिक्के बरुत्तदे एंब भाव. ) कारण ई जातिय लक्षणवेनु एंत केळिदरे नित्यसमाचेयं जातिः एंत उत्तर कोडुत्तारे–नित्यसमाएंदरे तार्किकरु हीगे हेळुत्तारे. शब्दोऽनित्यः हीगे अनलु अनित्यत्वरूपसाध्यवु अनित्यवो नित्यवो अनित्य एंदपक्षदल्लि शब्दक्के अनित्यत्व इल्ल नित्यत्ववे अदे एंद हागे आगुत्तदे. अनित्यत्ववु नित्ययंदपक्षदल्लि नित्यधर्माश्रयवु अनित्य ह्यागे आदीतु ई प्रकार विवक्षितधर्मखंडनवु नित्यसमायंत अनसिकोळ्ळुत्तदे. ई मातु प्रकृतक्के कूडिसि हेळुवा–विशिष्टादिगे विशेषणादिगळदेसेयिंद भेदांगीकार माडिदरे भेदरूपधर्मक्के भिन्नाभिन्नत्वरूपविकल्प अनुपपत्तियिंद धर्मिभूताविशिष्टादिगे तद्विशिष्टत्वक्के भेदाविशिष्टत्वक्के खंडनवागुवदरिंद नित्यसमाजातिः एंदेन्नुत्तारे. इदके तार्किकर कारिकाइद्ददेनंदरे धर्मस्यतदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभंगोनित्यसमोमतः । " ई कारिकाद अर्थवन्ने टीकारायरु विवक्षित एंब वाक्यदल्लि

अनुवाद माडुत्तारे. ईवाक्यद अर्थ—तम्मगे प्रतिपादन माडलिक्के इच्छित-वादधर्मक्के तद्तद्रूप विकल्पदिंद (शब्दवु अनित्यवदे. अदु अनित्यवो नित्यवो एंत मेले हेळिदंते विकल्प हाकिदरे तद्तद्रूपविकल्पवायितु एंत अर्थ.) धर्मिगे धर्मविशिष्टखंडन इद्दहु नित्यसमा एंत अनसिकोळ्ळुत्तदे. याव मातिनगोस्कर ई तर्कविरोधपरिहारादिप्रपंचन (सत्यज्ञानादिवाक्य-गळिगे विशिष्टार्थकत्वप्रपंचन हांगु आदिपदर्दिद प्रकृष्टप्रकाशश्चंद्र इत्या-दिगळल्लि हेळिद वैशिष्ट्य) माडितो अदन्नु श्रीमध्वरायरु अतोनिखिल एंब वाक्यर्दिद उपसंहार माडुत्तारे—"याव कारणद्देसेयिंद पराऽस्यशक्ति-र्विविधैव श्रूयते इत्यादि श्रुतिगळल्लि विशिष्ट प्रतिपादनवु माडल्पडुत्तदो मत्तु अंतरानुपपत्तिप्रयुक्त हांगु बाह्यतर्कप्रयुक्त बाधा इल्लवो आकारणद्द-सेयिंद ब्रह्मनु अशेषगुणगणाढ्यनेंत श्रुत्यभिप्रेतवायितु." गुणगणाढ्यनादंथ ब्रह्मगे श्रुत्यभिप्रेतत्व इद्दपक्षदल्लि एनु सिद्धवायितु एंत आकांक्षा हुट्टलु एवंच एंब वाक्यर्दिद समाधान माडुत्तारे इदु श्री. वे. ती. टिप्पणिप्रकार अवतरणिका इन्नमेले श्री. रा. ती. टिप्पणिप्रकार अवतरणिका बरेयुत्तेने. पूर्वदल्लि शून्यवादिनिरासपरसूत्रगळु अंदरे नासतोऽदृष्टत्वात् नाभाव उप-लब्धेः इत्यादि सूत्रगळिगे शून्यदंते अखंडब्रह्म एंत प्रतिपादन माडुवंथ मायावादिमत निराकरणत्व विषयदल्लि अखंडब्रह्मबोधक श्रुतिविरोधवु सूत्रकाररिगे बरुत्तदे एंत एनु पूर्वदल्लि उक्तवागित्तु अदर निरासरूपउप-संहार सिद्धवायितु एंब मातु एवंच एंब वाक्यर्दिद टीकारायरु हेळुत्तारे. एवंच एंदरे गुणगणाढ्यस्यैव श्रुत्यभिप्रेतत्वइरलु सूत्रकाररिगे श्रुतिविरोध बरलिल्लवेंब मातु सिद्धवायितु.

टीका—एव दृश्यत्वाद्यनुमानानां कालातीततामभिधायासिद्धिमप्याह ॥

मूल—अनिर्वचनीयासिद्धेरेवानुमानस्याप्यासिद्धिः।

टीका——यथानिर्वचनीयासिद्धेरप्रसिद्धविशेषणता एवं ततएवानुमानस्य दृश्यत्वादेरसिद्धिरपीतियोज्यं । तथाहि । नतावद्दृश्यत्वादिकं सत् तेनैवानैकांत्यापत्तेः । नाप्यनिर्वचनीयं । तस्य पूर्ववदसिद्धत्वात् । तथाचा-

सत्वे वक्तव्ये सुतरामसिद्धिः। ननु सामान्यतः प्रयुक्ते हेतौ विशेषविकल्पैर्निराकरणे धूमाद्यनुमानभंगइति। मैवं। अनिर्वचनीयासिद्धेरेव। नखल्वसिद्धाश्रयं सामान्यं सिद्धं भवति। दृश्यत्वाद्यनुमानेष्वप्येतएव-दोषा इत्यस्यैवायं प्रपंचः। नचैतत्प्रागनुक्तमेव। प्रकृतत्वसाम्ये संभवेचसत्यर्धजरतीयानुपपत्तेः। अ-थवा प्रतिकूलतर्कपराहतिमनेनाह। यदिजगन्मिथ्या-स्यात्तदा दृश्यत्वाद्यनुमानस्यापि जगदंतः पातित्वेन मिथ्यात्वेनासिद्धिः स्यात्। अन्यथा तेन व्यभिचारा-पातात्। ननु न वयं मिथ्यापदेन जगतोऽसत्वमाच-क्ष्महे। किन्नामानिर्वचनीयत्वमेवातः कथं तदंतः पातित्वेनानुमानस्यासिद्धिरितिचेत्। न। तथासत्य-निर्वचनीयासिद्धेरप्रसिद्धविशेषणत्वस्योक्तत्वादिति। अथवा शुक्तिरजतादेरनिर्वचनीयासिद्धेस्तथा शुक्ति-कायाएव दृग्विषयत्वाभ्युपगमादनिर्वचनीयतयाऽभि-मतस्य रजतस्यासिद्धेरदृश्यत्वाद्दृष्टांतस्य साध्य-साधनवैकल्येनानुमानस्यानुपपत्तिरितियोजनीयं। माभूदनुमानात्प्रपंचमिथ्यात्वसिद्धिः श्रुत्यातुभविष्य-ति। तथाहि। उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतंमतमविज्ञातं विज्ञातमिति ब्रह्मज्ञानेन सर्वज्ञानमुच्यते। नच सर्वस्य वियदादिप्रपंचस्य ब्रह्मव्यतिरेकेण परमार्थतःसत्वे तदुपपद्यते। तेन ज्ञायते ब्रह्मैव परमार्थसत् वियदादिकंतु तत्रारोपितं।

तदूव्यतिरेकेण नास्तीत्यस्यार्थइति । मैवं । एकवि· ज्ञानेन सर्वविज्ञानस्य साद्दश्यप्राधान्याभ्यामुपपत्तेः । नचान्यथोपपद्यमानंवाक्यं प्रपंचस्य ब्रह्मण्यारोपितत्वं प्रतिपादयितुं शक्नोति ।

श्री वे. तीं. टि. अवधारणलब्धमर्थं दर्शयन्योन्नजयति ॥ यथानिर्वचनीयेत्यादिना । ननुदृश्यत्वाद्यनुमानेष्वप्येतएवेत्यत्रा-स्यार्थस्योक्तत्वादिदं वाक्यं व्यर्थमित्यतआह ॥ दृश्यत्वादीति । तत्रातिदेशबलादिदं दूषणं सूचितमेवात्रशब्दतएवोपपाद्यतइति भावः ॥ अर्धजरतीयानुपपत्तेरिति । अत्र केचित् । अर्धजरती-शब्देन सर्वात्मना जरतींत्यक्तुमशक्नुवतःप्रक्रियालक्ष्यते । छप्रत्य-येनचोपमानोपमेय ( भाव ) रूपसंबंधउच्यते । तथाच तत्प्र-क्रियातुल्यप्रक्रियानुपपत्तेरित्यर्थः पर्यवस्यति । तथाच तत्प्रक्रिया। अर्धजरत्याः कामयते अर्धं नकामयते मुखं जरत्याः कामयते नांगांतरमिति । एवंच जरत्या एकदेशेकामनाएकदेशेनेत्येतद्यथा जुगुप्सितमेवं प्रकृतत्वसाम्ये संभवेच सति कस्याचित्परामर्शः कस्यचिन्नेत्येतज्जुगुप्सितमितिभावइत्याहुः । अन्येतु चरतीयानु-पत्तेरिति पाठः । तत्र चरतिश्चरणं भक्षणमिति यावत् । तेन तत्कर्तुः प्रक्रिया लक्ष्यते ।

स्पष्टीकरण—छप्रत्ययेनेति अर्धजरतीय ई शब्ददल्लि ' अर्धजरती ' ईशब्ददिंदेसियिंद छ प्रत्ययवागि अदर स्थानदल्लि ( ईय ) एंत आदेश आगिरुत्तदे [ कुशाग्रीया ( बुद्धिः ) स्वीयः ] इत्यादि उदाहरणगळल्लि छप्रत्य-यवागि अदर स्थान ( ईय ) आदेश अंदरे प्रकृतोदाहरणदल्लि ( ईय ) एंब आदेशवे ( छ ) प्रत्ययस्थानदल्लि आगिरुत्तदे ( गहादिभ्यश्च ) ईसूत्रदिंद अर्धजरतीशब्ददिंदेसेयिंद संबंधरूपार्थदल्लि छप्रत्ययवागिरुत्तदे. अर्थानुरोध-दिंद प्रकृतोदाहरणदल्लि उपमानोपमेयरूपसंबंधतेगेदुकोळ्ळबेकु.

छद्मप्रत्ययेनच पूर्ववत् संबंधउच्यते । तेनार्धभक्षणकर्तुः प्रक्रिया-तुल्यप्रक्रियानुपपत्तेरित्यर्थः पर्यवस्यति । इत्थं हि तत्प्रक्रिया सगर्भां मत्स्यवधूं गृहीत्वा कश्चिदस्याः प्रसवे मत्स्यांतरं भविष्यति एवंच तदपि भक्षणार्थं भविष्यति। इदानींचेमामपक्त्वाऽनश्नन्नहं न स्थातुमुत्सहइति विचार्यवदति अस्या अर्धं पाकाय अर्धं प्रसवायेति। एवंच तद्यथा जुगुप्सितमेवमेतदपीतिभावइत्याहुः ॥ शुक्तिकाया-एवेति । रजतं दृष्टमिति भ्रममात्रत्वात् । यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषयइति तल्लक्षणाच्चेतिभावः । अनुप-पत्तिरिति मूलगतासिद्धिपदार्थकथनं ॥ श्रुत्येति । वाचारंभणश्रु-त्येत्यर्थः । तस्याएव पूर्वमुदाहृतत्वात् । उत तमादेशेत्यादि श्रुतिविचारस्तूपोद्घातसंगत्येतिभावः ॥ नचेति । अन्यज्ञानेनान्य-ज्ञानायोगादितिभावः ॥ तदिति । ब्रह्मज्ञानेन सर्वज्ञानवचनमि-त्यर्थः । नन्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञया सर्वस्य ब्रह्माभिन्नत्वेन परमार्थसत्वमेव सिध्येन्न मिथ्यात्वमित्यत आह ॥ तेनेति । ब्रह्माभिन्नत्वमिह ब्रह्मव्यतिरेकेणासत्वमेव विवक्षितं । नस्वरूपाभि-न्नत्वं । जडाजडयोस्तस्यासंभवादितिभावः ॥

श्री रा. ती. टि. एवकारसार्थक्यायाह ॥ यथेति । तेनैवानै-कांत्यादिति । दृश्यत्वादिहेतौ सत्यपि दृश्यत्वादौ मिथ्यात्वाभा-वादितिभावः ॥ पूर्ववदिति । विमतमनिर्वचनीयं बाध्यत्वादित्य.दौ साध्यस्यैवेत्यर्थः ॥ धूमादीति । पर्वतोऽग्निमान्धूमादित्यत्रैतद्देश-कालसंलग्नो धूमो हेतुश्चेद्दृष्टांतस्साधनहीनः । तद्देशादिसंबद्धश्चेद-सिद्धिरित्यादिरूपेण निरासंसंभवादितिभावः धूमत्वस्योभयधार्मि-णस्सत्त्वेनोभयसाधारणोप्यनिर्वचनीयकोटेरलीकत्वेनानिर्वचनीये स-त्येच नैकमनुगतं दृश्यत्वादिसामान्यमस्तीतिभावेनाह ॥ नखल्वि-ति । इतिशब्दो वाक्यव्याख्यासमाप्तौ । पूर्ववाक्येनापौनरुक्त्या-याह ॥ दृश्यत्वादीति । ननु तत्रैतच्छब्देन तत्प्रकृताप्रसिद्धविशे-

षणत्वादयो सिद्धिभिन्नाः परामृश्यतामितिभावेनाशंक्य निराह ॥ नचैतादिति । प्रकृतत्वसाम्यइति । अनुमानदोषस्य प्रकृतत्वसाम्ये प्रतिज्ञायामिव हेतावपि संभवेच सति प्रतिज्ञादोषस्यैव तत्रोक्तिर्न हेतुदोषस्येत्यर्धजरतीयानुपपत्तेरित्यर्थः । अतएव प्राक् किंचे-त्यादिनाऽसिद्धिरपि व्युत्पादितेतिभावः । अर्धजरतीशब्देन सर्वा-त्मना जरतीं त्यक्तुमशक्नुवतः प्रक्रियालक्ष्यते । उपमानार्थे छप्रत्ययः । अर्धजरत्याः कामयते । अर्धनेति जरत्याः मुखं कामयते नांगांतरमित्यर्धे कामनार्धेनेति कामुकप्रक्रिया यथाहेया तथा प्रकृतसत्वसाम्ये संभवे च कस्याचित्परामर्शः । कस्याचिन्ने-त्येतस्यानुपपत्तेरित्यर्थः । अर्धचरतीयेतिपाठे अर्धं पाकेन भक्षणा-यार्धं प्रसवायेत्येतद्यथानुपपन्नं तथेत्यर्थः । चरगतिभक्षणयोरिति-धातोरित्याहुः । प्रतिकूलतर्केति दृश्यत्वाद्यनुमानस्येतियोज्यं । अनेनेति । अनिर्वचनीयासिद्धेरेवेत्यादिवाक्येनेत्यर्थः । अन्यथेति । सत्यत्वे तेन दृश्यत्वादिनैव व्यभिचारापातात् । दृश्यत्वादौ दृश्य-त्वाभावश्चेदज्ञानासिद्धिरितिभावः । तदेव वाक्यं दृष्टांतदोषोक्ति-परतया व्याचष्टे ॥ अथवेति । अनिर्वचनीयासिद्धेरिति । अनि-र्वचनीयत्वासिद्धेरित्यर्थः । तेन साधनहीनतोपपादनं ध्येयं । हेतुही-नतामुपपादयति ॥ तथेति ॥ शुक्तिकायाएवेति । यत्सन्निकृष्टेन यज्ज्ञानमुत्पद्यते सतस्यविषयइति विषयत्वनिर्वचनात् । शुक्ति-सन्निकृष्टकरणेनैवेदंरजतमिति ज्ञानस्योत्पत्त्या शुक्तिकायाएव दृश्य-त्वाभ्युपगमादित्यर्थः । असिद्धेरित्यनुवादः ॥ अदृश्यत्वादिति । व्याख्याअसिद्धिरित्यस्यार्थोनुपपत्तिरिति । दृश्यत्वादेरसिध्याद्यु-क्तिः ॥ ७ ॥ उतेति । येनाश्रुतं श्रुतं भवतीत्यादिरूपं तमादेश मुपदेशमप्राक्ष्यः । पृष्टवानभूः उत किमित्यर्थः । तत्रारोपितमि-त्यस्यार्थस्तद्व्यतिरेकेण नास्तीत्यर्थोऽस्य वाक्यस्येति ॥ सादृश्य-प्राधान्याभ्यामिति । एकगोज्ञाने तत्सदृशगवांतरेषु ज्ञानमिव

ब्रह्मज्ञानेऽबाधितत्वादिसादृश्येन जगज्ज्ञानं भवति ग्रामे प्रधानपुरुषज्ञानेऽप्रधानपुरुषज्ञानमिव प्रधानब्रह्मज्ञानेऽप्रधानजगज्ज्ञानं भवतीत्यर्थः फलापेक्षयैतद्ध्येयं ॥ अन्यथेति ।

श्री श्री. ती. टि. तेनैवेति । दृश्यत्वे दृश्यत्त्वाभावेऽअज्ञानासिद्ध्यापत्तेः अतोदृश्यत्वे दृश्यत्वसद्भावेऽपिमिथ्यात्वाभावाद्व्यभिचारइत्यर्थः ॥ धूमाद्यनुमानेति । एतद्देशकालविशिष्टधूमस्य हेतुत्वे दृष्टांते साध्यवैकल्यं अनेतद्देशकालविशिष्टस्य तस्य हेतुत्वे स्वरूपासिद्धिरतो धूमत्वसामान्यमेव हेतुरितियथातत्रोच्यते तथात्रापि दृश्यत्वसामान्यमेव हेतुरस्त्वितिभावः ॥ इदं अनिर्वचनीयासिद्धेरेवेतिवाक्येनोच्यमानं दूषणमित्यर्थः ॥ प्रागिति । प्रागुक्तस्यैव हि प्रपंचः कार्यो नान्यस्य । इदंच दूषणं प्रागनुक्तमेवातो नायं पूर्वोक्तस्य प्रपंचइत्यर्थः ॥ प्रकृतत्वेति दृश्यत्वाद्यनुमानेष्वपीति वाक्येन ये पूर्वप्रकृतादोषा । दृश्यत्वाद्यनुमानेऽतिदिष्टास्तैस्सहास्यापि दोषस्य प्रकृतत्वेन साम्ये संभवति सत्यर्धजरतीयन्यायेन कस्यचिद्दूषणस्यातिदेशः कस्यचिन्नेत्येतज्जुगुप्सितमितिभावः । असिद्धिः स्वरूपासिद्धिः । अन्यथा मिथ्यात्वाभावे ॥ तेनेतिदृश्यत्वएवोक्तरीत्या व्यभिचारापातादित्यर्थः ॥ शुक्तिरजतादेरिति । असदेव रजतं प्रत्यभादित्यनुभवेन शुक्तिरजतादेरसत्त्वावगमेनानिर्वचनीयत्वासिद्धेरित्यर्थः । तथाच साध्यवैकल्यमिति भावः । साधनवैकल्यंचाह ॥ तथेति ॥ शुक्तिकाया एवेति । यत्सन्निकृष्टेनेत्यादिविषयत्वं शुक्तिकायामेवास्ति न रजते असता सन्निकर्षायोगादितिभावः असिद्धेरित्यनूद्य अदृश्यत्वादितिव्याख्यातं । तथाच दृश्यत्वासिद्धेरित्यर्थो द्रष्टव्यः । असिद्धिरित्यस्यार्थमाह ॥ अनुपपत्तिरिति । वस्तुवृत्त्या नेति परमार्थः ॥

ಟೀಕಿಯ ಅರ್ಥ—ಈಪ್ರಕಾರವಾಗಿ ದೃಶ್ಯತ್ವಾದ್ಯನುಮಾನಗಳಿಗೆ ಕಾಲಾತೀತತಾ (ಬಾಧ) ದೋಷವನ್ನು ಹೇಳಿ ಅಸಿದ್ಧಿಯನ್ನಾದರೂ ಮೂಲಕಾರರು ಹೇಳುತ್ತಾರೆ—"ಹ್ಯಾಗೆ

अनिर्वचनीय असिद्धियिरुवदरिंद ( अनिर्वचनीय एंब पदार्थ इल्लदे इरुवद-रिंद ) अप्रासिद्धविशेषणता आगुत्तदो अदरंते दृश्यत्वाद्यनुमानक्के असिद्धि-यादरू प्राप्तवागुत्तदे ह्यागंदरे दृश्यत्वादिगळिगे सत्यत्व हेळिदरे व्यभि-चार. अनिर्वचनीयत्व हेळिदरे अप्रसिद्धि—असत्व हेळिदरे आसिद्धि ई प्रकार प्राप्तवागुत्तदे " स्पष्टीकारण टीकाअर्थदल्लि बरुत्तदे. अवधारण ( मूलदल्लिद्द एवकार ) लब्धमर्थवन्नु तोरिसि मूलवन्नु योजना माडुत्तारे यथा एंब वाक्यदिंद. ह्यागे अनिर्वचनीय असिद्धिइरुवदरिंद अप्रसिद्धविशेषण-ताबरुत्तदो अदरंते दृश्यत्वाद्यनुमानक्के असिद्धियादरु बरुत्तदे एंत योजना माडतक्कद्दु अदुह्यागंदरे—दृश्यत्वादिगळु सत् अल्ल याकंदरे तनैव अंदरे दृश्य-त्वादिहेतुगळल्लि दृश्यत्व इद्दाग्यादरू मिथ्यात्वाभावइरुवदरिंद अनेकांत्यब-रुत्तदे. अनिर्वचनीयवादरु अल्ल याकंदरे पूर्वदल्लि हेळिदंते ( विमतमनिर्वच-नीयं बाध्यत्वात् ईस्थळदल्लि ) साध्याप्रसिद्धिबरुत्तदे. असत्व हेळिदरे सुतरां असिद्धिबरुत्तदे ( असत् एंब पदार्थवु पक्षदल्लि ह्यागिद्दीतु इल्लवेंत अर्थ ) परनु शंकिसुत्ताने—सामान्याकारदिंद प्रयोगिसिदंथ हेतुगळन्नु विशेष विकल्पगळिंद निराकरणमाडलु धूमाद्यनुमानगळु कूडलिक्किल्ल. ( स्पष्टीकरण—पर्वतोऽग्निमान्धूमात् एंब स्थळदल्लि ईदेश ( पर्वतप्रदेश ) कालसंबद्धधूमवु हेतुमाडिदरे दृष्टांतसाधनहीनवागुत्तदे याकंदरे पर्वतप्रदे-शादिसंबंधवु महानसदृष्टांतदल्लि इरुवदिल्ल एतद्देशकालसंबंधाभावविशिष्ट-धूमहेतु माडिदरे पर्वतदल्लि ईथहेतुइल्लदरिंद असिद्धिबरुत्तदे. ईप्रकार धूमा-द्यनुमानगळु कूडलिक्किल्ल एंत अर्थ धूमत्वक्के उभयधर्मिगळल्लि ( पर्वतीय-धूम महानासियधूमगळल्लि ) ( इरुवंथ धूमत्वरूपसामान्यक्के ) सत्वइरुवदरिंद उभयसाधारणविद्दाग्यादरू अनिर्वचनीयकोटिगे असत्वविरुवदरिंद सत्यदृ-श्यत्व हांगु अनिर्वचनीयदृश्यत्वगळल्लि अनुगतवादंथ सामान्यदृश्यत्वविल्ल-वेंब भाववन्नु नखलु एंब वाक्यदिंद टीकारायरु हेळुत्तारे—असिद्धवस्तुवन्नु आश्रयसिदंथ सामान्यवु ( अनिर्वचनीयरूप असिद्धवस्तुवन्नु आश्रयसिदंथ दृश्यत्वरूपधर्मवु ) सिद्धवागलारदु ( सत्वेन इरलारदु एंत अर्थ. ) परनु शंकिसुत्तान—दृश्यत्वाद्यनुमानेष्वप्यतएव दोषः एंत पूर्वदल्लि उक्तवागिरु-त्तदे अंदबळिक्क अनिर्वचनीयासिद्धेरेवं एंब मूलवाक्यवु व्यर्थइरुत्तदे पौनरु-क्तिदोषबंतु एंत शंकिसिदरे दृश्यत्वाद्यनुमाने एंबवाक्यदिंद समाधानमाडु-त्तारे. दृश्यत्वाद्यनुमानएंब पूर्वदल्लि उक्तवाद मातिन इदु विस्तारइरुत्तदे

कारण पौनरुक्तिदोषविल्ल. परनु अनुत्ताने—पूर्वदल्लि हेळिद्दक्के विस्तारमाड-तक्कद्दु एंत नियमउंटु ई दूषणवु पूर्वदल्लि हेळिल्ल आदकारण पूर्वोक्तवादंथाद्दक्के इदु प्रपंचअल्लवेंत शंकिसिदरे टीकारायरु हेळुत्तारे--इदु पूर्वदल्लि अनुक्तवादंथा-द्दल्ल उक्तवागियेइरुत्तद एंब भाव प्रकृतत्वसाम्य संभविसिदाग्यादरू अर्धज-रतीयन्यायअनुपपत्तियागुत्तदे. प्रकृतत्वसाम्य अंदरे ह्यागे अर्धजरतीयन्याय-अंदरनु अर्धजरतीयन्यायाइल्ले याके कूडुवदिल्ल ईबग्गे स्पष्टीकरण—टिप्प-णिगळन्नु उदहरसि अर्थ बरेयुत्तेने—

**श्रीनिवासतीर्थरटिप्पणि—दृश्यत्वाद्यनुमानेष्वपीति वाक्येन ये पूर्वप्रकृता दोषा दृश्यत्वाद्यनुमानेऽतिदिष्टास्तैसहास्यापि दोषस्य प्रकृतत्वेन साम्ये संभवति सत्यर्धजरतीयन्यायेन कस्यचिद्दूषण-स्यातिदेशः कस्यचिन्नेत्येतज्जुगुप्सितामितिभावः ।**

अर्थ—दृश्यत्वाद्यनुमानेष्वपि एंब वाक्यदिंद याव पूर्वप्रकृतवादंथ दोषगळु दृश्यत्वाद्यनुमानगळल्लि अतिदेशमाडल्पट्टिरुत्तवे आदोषगळसह वर्तमान ई दोषक्कादरु (आसिद्धिगादरु) प्रकृतत्वसाम्य संभविसिद्दरिंद अनुमानदोषक्के प्रकृतत्वसाम्य इरलु अंदरे प्रकृतदल्लि दृश्यत्वानुमानक्के दोष हेळतक्कद्दे आदोषवु प्रतिज्ञादंते (प्रतिज्ञादोषबाधादिगळु) हेतुविनल्यादरु संभविसिदरे (हेतुदोषअसिद्ध्यादि) प्रतिज्ञदोषवे हेळबेकु हेतुदोषहेळबारदु ई मातु अर्धजरतीयदंते संभविसुवदिल्ल अर्धजरतीय न्यायदंते हलवु दूषणक्के अतिदेश हलवुगाळिगे अतिदेशमाडदे इरोण इदु निंद्य इरुत्तदे.

इन्नमेले अर्धजरतीयन्यायएंबुवद्दके श्रीवेदेशतीर्थर टिप्पणियिरुत्तद अदर भाषांतर माडुत्तने—( मोदलिगे कठिणशब्दगळ अर्थ बरेयुत्तने—जरती वृद्धस्त्री जुगुप्सितं निंद्यं गर्ह्यं ।) ओब्ब कामुकपुरुषनु वृद्धस्त्री-मुखवन्नु इच्छैसुत्तान अवळ अंगांतरवन्नु अपेक्षिसुवदिल्ल. ईप्रकार वृद्धस्त्री-य एकदेशकामनामाडोण एकदेशमाडदे इरोण इदु ह्यागे जुगुप्सितवो अदरंते प्रकृतत्वसाम्यसंभविसिदाग्यादरू एनके मातुगळन्नु परामर्शमाडोण एनके मातुगळन्नु परामर्श माडदेबिडोण इदु निंद्यइरुत्तदे एंत केलवरु हेळुत्तारे.

अर्धजरतीय न्यायेन इद्दल्ले अर्धजरतीय एंत पाठ इद्दपक्षदल्लि अदर अर्थ ह्याग माडबेकु एंब बग्गे श्री. वे. ती. बरदिद्दारे अदर अर्थवन्नु

